॥१०॥ त्वं चेत् किंपच दक्षसे पठ कृतिं नोचेद्गृहाणायुधं व्यापारं कुरु पाशुपाल्यमथवा धिक्केरलान्वा व्रज । मां नो चेत्परिभाषसेऽस्मि फणितो भक्त्या त्वया मत्कृते सृष्टो गुग्गुलुधूपजः परिमलो न स्यात्समासो यदि ॥११॥ चोलेन्दोस्सचिवोद्वहे मयि चतुष्षष्टिप्रतीवन्धकौ द्वित्रिश्लोकजगत्प्रजापतिगणो हा दुष्कवीनां जनः।अन्धोपस्थनयान्नरस्तुतिधनैः खद्योतवद्द्योतते मन्ये जाग्रति चन्द्रचूडसुरते के ताम्रचूडारते ॥१२॥ युक्त्या जीवितविद्धसालतनवस्सार्थप्रवन्धद्वयीकन्याकन्दुकभूतिगीर्विवरणे सङ्कोचभाजोऽप्यमी । कीर्तौ दत्तदृशः शिरोधृतजयस्वा...सुमाः कुर्महे खेलेनोत्तरमेव रामचरितं टीकाकृतार्थोत्तरम् ॥१३॥ इतरपूर्वकविग्रथनाधिकाः सपुनरुक्तपदा भवभूतिजाः । अति हि नाम्रयति स्म तु चापयोर्मनसि सह्यतरास्सघृणैर्बुधैः ॥१४॥ ग्रन्थो मे मित इह विस्तरे वृथा स्यात् गायत्र्यष्टकपठने बुधोऽलसो यत् । यल्लेखेष्वपि शिवरामकृष्णनाम्नां यच्चायं वटुगणपाठने धनेच्छुः ॥१५॥ वृत्तोक्तिसालंकृतिभावफक्किकारसार्थसूत्राद्यनुवादचातुरीम् । पश्यन्तु सन्तोऽनुपमानमस्कृतप्रचण्डराहूदयदीपिकादिषु ॥ १६ ॥ अथैतन्नाटकस्थायिसंविधानाववोधने । वस्तुपात्रादिनिर्देशः संग्रहात्क्रियते मया ॥ इदं कविभ्य इत्यस्मिन्पद्ये प्रामाणिकैरितः । वन्द्यो गणेशः पूर्वार्धे उत्तरार्धे सरस्वती ॥ श्रीमान्कालप्रियानाथो देवस्सूत्रधरो नटः । पारिपार्श्विकपर्याय उभौ प्रस्तावनेरितौ ॥ रामस्सीता ततः कञ्चुक्यष्टावक्रोऽथ लक्ष्मणः । प्रतिहारी दुर्मुखोऽमी प्रथमाङ्के प्रवेशिताः ॥ आत्रेयी तापसी नाम्ना वासन्ती वनदेवता । रामश्च दिव्यपुरुषश्शम्बूकोऽङ्के द्वितीयके ॥ तमसा मुरला सीता रामो वासन्तिकेत्यमी । तृतीयेऽङ्के ततो दाण्डायनिस्सौधातकिर्मुनिः ॥ जनकोऽरुन्धती देवी कौसल्या गृष्टिकञ्चुकी । लवश्च वटवः क्रुद्धपुरुषोऽङ्के चतुर्थके ॥ सुमन्त्रश्चन्द्रकेतुश्च लवोऽप्यङ्के च पञ्चके । अथ विद्याधरी विद्याधरो रामो लवस्तथा । चन्द्रकेतुः कुशः षष्ठे सप्तमेऽङ्के तु लक्ष्मणः । रामोऽत्र सूत्रधारस्तु गर्भनाटककौतुके ॥ उत्सङ्गितौ दारकौ द्वौ सीता गङ्गा पृथिव्यपि । इदमन्तं नाटकीयमित्यूह्यं पात्रपञ्चकम् ॥ ज्ञेया नाटकसीता सा याऽरुन्धत्या सहागता । नाटकीयौ कुशलवौ प्राप्तौ वाल्मीकिना सह ॥ भ्रमं विनावधातव्यं मन्त्रज्ञैस्सूक्ष्मदृष्टिभिः । शिष्योक्तेन पथानेन नाटकं परिशील्यताम् ॥ अथ कालिदासादिसमानकालिकः भोजराजाश्रयः श्रीकण्ठनामा, 'साम्बा पुनातु भवभूतिपवित्रमूर्तिः' इति श्लोकनिर्माणवेलागुणवशादानन्दभरितेन राज्ञैव भवभूतिरिति ख्यापितः कविः, 'नामानि तव गोविन्द यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा ॥' 'आवयोरन्तरं नास्ति' इत्यादिवचनसिद्धान्तेन शिवरामकृष्णादिनाम्नां एकार्थतैव प्रामाणिकसंमता इत्यवगच्छन्नतितुच्छबौद्धकुलशासनपूर्वकं गोब्राह्मणवेदशास्त्रोद्धरणाय भगवत्पादावतारो भवीति ( ? भवतीति ) स्वप्न ... यामाज्ञापयतः साम्बशिवस्य प्रसादादद्वैतमेव

जगदवलोकयन्नेप तदा मतान्तरग्रन्थाभावादवैरबुद्धि ( द्धिः ? ) यथातथायं स परब्रह्मणोऽपि, 'संभवामि युगे युगे' इति प्रतिज्ञया लीलामानुपविग्रहस्य श्रीरामस्य चरितं चिकीर्षुः अविघ्नपरिपूरणाय प्रतिभाविशेषाय च पूर्वार्धोत्तरार्धाभ्यां गजाननसरस्वतीप्रणामात्मकं मङ्गलं चरीकर्ति इदं कविभ्यः पूर्वेभ्य इति ॥ १ ॥ इदमिति सामान्ये नपुंसकम् । अत एव 'शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः ।' इति वाल्मीकिः । 'शक्यमरविन्दसुरभिः' इति भर्तृमीढश्च । इदं नमोवाकं नम इत्युक्तिम् । 'नमउक्तौ नमोवाकः' इत्यगस्त्यः । पूर्वेभ्यः पुरातनेभ्यः अलौकिकेभ्य इत्यर्थः । वैदिकेभ्य इति यावत् । वेदानां लोकपूर्वत्वादिति भावः । 'यस्य निश्वसितं वेदाः' इति स्मरणात् । कविभ्यः कवये गणपतये इत्यर्थः । 'गणपतिं हवामहे कविं कवीनाम्' इत्यादिश्रुतेः । 'कविश्शुक्रगजाननौ' इति जयः । कविभ्य इति पूजायां बहुत्वम् । तथा च 'स्मरन्ति ताता अपि माम्' इति विक्रमार्कचरिते श्रीनाथः । प्रशास्महे ब्रूमहे । 'प्रशासनं तु निर्देशव्याहाराचरणादिषु' इति लिङ्गानुशासनम् । आशास्महे इति वार्थः । केचित्तु—इमे च ते कवय इति एकपदमाहुः, तन्न । पूर्वेभ्य इति विशेषणापेक्षया इदं कविभ्य इति विशेष्यस्य बहुवर्णघटितत्वान्नान्दीप्रारम्भ एव क्लिष्टकल्पनाया अन्याय्यत्वाच्च । पूर्वेभ्यः प्राचेतसादिभ्य इत्यन्ये प्राहुः । तदपि न साधीयः, अनुग्राहकवाण्यपेक्षया अनुग्राह्यप्राचेतसादिभ्यः प्रथमं प्रणामकथनस्यायुक्तत्वात् ॥ न च —'कवीन्द्राः कल्पन्ते कथमपि विरिञ्चिप्रभृतयः' इति भगवत्पादैरभिधानात् पूर्वेभ्य इत्यर्थ इति वाच्यम् । हंसीभूतविष्णुविधात्रादि (?) केतकीकुसुमसाक्षिणो विरिञ्चस्य परमेश्वररुपा चक्रादिदानप्रसादपात्रनारायणसमक्षमेव प्रणामादिप्रतिष्ठायां दूरीकृतत्वात् । 'या ब्रह्माच्युतशङ्करप्रभृतिभिः' इति वचसा वाण्यपेक्षयाऽनभ्यर्हितत्वाच्च । एवमालोच्य पूर्वार्धस्य गणपतिपरत्वमेव सङ्गतमिति विशेषज्ञा इति दिक् ॥ अमृतां शाश्वतीम्, यज्ञशेषसुधामोक्षस्वरूपाम् । भीमो भीमसेन इत्यादिवन्नामैकदेशे नामग्रहणम् । 'यज्ञशेषसुधामोक्षेष्वमृतं शाश्वते त्रिषु' इति विक्रमार्कः । आत्मनः परब्रह्मणः । 'परब्रह्मणि चात्मा' इति संसारावर्तः । कलां शक्तिम् । 'विद्यायां कालभेदे च शक्तौ शिल्पे कला' इति शाश्वतः । तां प्रसिद्धाम्, अनिर्वाच्यां वा । वाणीं सरस्वतीं च वन्देमहि इत्येकपदो बहुवचनो धातुः । 'प्रसिद्धेनाप्रसिद्धं बोधयेत्' इति न्यायेन वन्देमहीत्यस्य प्रणमाम इत्यर्थो बोध्यः । वयमिति शेषः । 'वन्देमहि महादेवं मन्देतरधियो वयम्' इति हालस्मिश्रः । नान्दीपदनियमं न खलु कवयो गणयन्ति । अर्थादत्र द्वादशपदी नान्दी संवृत्ता । कलात्मशब्दाभ्यां सीतारामौ सूच्येते ॥ 'अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम् ।' इति लक्षणात् ॥१॥ अथ कविः, 'कविकाव्यनटादीनां प्रशंसा तु प्ररोचना' इति, 'प्ररोचना चाङ्गतया प्रयुज्यते' इति च लक्षणावश्यकत्वादा-

नान्द्यन्ते । **सूत्रधारः**—अलमतिविस्तरेण । अद्य खलु भगवतः कालप्रियानाथस्य[1] यात्रायामार्यमिश्रान्विज्ञापयामि—एवमत्रभवन्तो विदांकुर्वन्तु । अस्ति खलु[2] तत्रभवान्काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो[3] भवभूतिर्नाम जातूकर्णीपुत्रः[4] ।

> यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्तते[5] ।
> उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते[6] ॥ २ ॥

---

त्मानं वर्णयन् नाटकीयेतिवृत्तसंक्षेपादिकं संग्रहेणोपक्रमते—**नान्द्यन्त** इत्यादि । **भगवतः** षाड्गुण्यपरिपूर्णस्य । **कालप्रिये**ति तत्रत्यदेव्या नाम । पुराणगम्येयं कथा । **यात्रा** महोत्सवप्रयुक्तेति भावः । **आर्येषु** ज्ञानवृद्धेषु । **मिश्रान्** पूज्यान् । **एवं** वक्ष्यमाणप्रकारेण । **अत्र** रूपके । **विदाङ्कुर्वन्तु** जानन्तु । **भगवान्** कीर्तिमान् । **काश्यपः** कश्यपवंशभवः काश्यपः । **मल्लिनाथ**प्रयोगात् **श्रीकण्ठ** इति **पदं** नाम **लाञ्छनं** व्यवहारः यस्य श्रीकण्ठाख्य इत्यर्थः । **श्रीकण्ठस्य** शिवस्य **पदे** पादावेव **लाञ्छनं** विरुदं यस्येति नार्थः । शिवपादाब्जनिरत इति यावत् । 'पदं स्थानाङ्घ्रिनामादौ' इति, 'लाञ्छनं व्यवहाराङ्कविरुदेषु' इति **रुद्रकेशवौ** ॥ 'शम्भो कालप्रियानाथ श्रीकण्ठ' इति **शशिशेखरे पुष्पदन्तस्तवे** । प्रमाणानि कोशादयः । 'कोशवानाचार्यः' इति स्मरणात् । **भवात्** शिवात् **भूतिः** भस्म संपत् यस्य ईश्वरेणैव जातु द्विजरूपेण विभूतिर्दत्ता, तदाप्रभृति भवभूतिरिति प्रसिद्धो जात इति च परावरविदो विदन्ति ॥ **यं ब्रह्माणमियं देवी**ति ॥२॥ ब्राह्मणं षट्कर्मनिरतम् । अनेनान्तर्मुखेऽप्युच्छृङ्खलप्रवृत्तौ **कालिदासकवावसूयादोषः** प्रकृतकविना...अनुसन्धेयम् । **अन्ववर्तत** इति प्रचुरं पाठमङ्गीकृत्य केचिद्व्याचक्रुः । तन्न, अस्ति खल्विति वाक्यविरोधात्, **अनुवर्तत** इत्येव पाठः । **तत्प्रणीत**मित्यविचारितरमणीयः पाठः । कविरस्ति यमिति तत्प्रणीतमिति च पूर्वोत्तरवाक्यानां परस्परासङ्गतत्वात् । **यत्प्रणीत**मिति युक्तः पाठः । पूर्ववाक्ये कविरस्तीति कथनेन उत्तरवाक्ययोः यमिति यत्प्रणीतमिति कथनस्य सामीचीन्यात् । अत एव, 'अम्भोजभूराविरासीत् । आभाति यत्कृतिः' इत्यसम्द्व्याख्यात**भोजचम्पौ** । शिष्यविज्ञापने विशेषज्ञाः प्रमाणम् । **प्रयोक्ष्यते** मयेति शेषः ॥ अत्र पुनः—'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इति **विक्रमार्क**वचनविश्वासिनः केचिदलङ्कारविद्यार्थिनः वदन्ति । तत्र विशेषज्ञ-

---

१ 'कालप्रियनाथस्य' इति ब-घ-क. २ 'खलु' इति नास्ति ब-पुस्तके. ३ '०प्रमाणतत्त्वज्ञः' इति ब. ४ 'जतुकर्णीपुत्रः' इति न. ५ 'अन्ववर्तत' इति न. ६ 'प्रयुज्यते' इति ब-घ.

एषोऽस्मि[1] कार्यवशादा[2]योध्यकस्तदानींतनश्च संवृत्तः । ( समन्तादवलोक्य । ) भो भो यदा तावदत्रभवतः[3] पौलस्त्यकुलधूमकेतोर्महाराजरामस्यायमभिषेक[4]समयो रात्रिंदिवमसंहृतानन्दनान्दीक[5]स्तत्किमिदानीं विश्रान्तचारणानि चत्वरस्थानानि ।

प्रविश्य । नटः—भाव प्रेषिता हीतः[6] स्वगृहान्महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गमराक्षसाः सभाजनोपस्थायिनश्च[7] नानादिगन्तागता[8] ब्रह्मर्षयो राजर्षयश्च यत्समाराधनायैतावतो दिवसानुत्सवं[9] आसीत् ।

---

हृदयङ्गमम् । यतः—‘कनिष्ठिकाधिष्ठितकालिदासा’ इति, ‘घटानां निर्मातुः’ इति, ‘जानीते जयदेव एव’ इति, ‘जानीते नितरामसौ’ इति, ‘योहि (धोयी ?) कविक्ष्मापतिः’ इति, ‘दण्डिनः पदलालित्यं भारवेरर्थगौरवम् । उपमा कालिदासस्य माघे सन्ति त्रयो गुणाः......॥’...को धनञ्जयः’ इति, ‘सूक्तिः सुधास्यन्दिनी’ इत्यादिभिर्गार्भिरात्मस्तुतिपरनिन्दावर्षाकालाकलापिनः सर्व एव कवयो गर्वनिधयोऽमीषु के...निरङ्कुशा एते तूर्णींशीलैः सस्मितविनयाभिनन्दनीयगत्रीगुम्फाः । अत एव, ‘सर्वं विनश्यति विहाय कवित्वमेकं...कायेन साकम्’ इति, ‘कल्प...रुते काव्यम्’ इति प्राच्यश्च, इत्यलमतिविस्तरेण ॥ ननु तदेतन्नाटकमेव न भवति शृङ्गारवीरयोरन्यतरस्य रसस्य प्राधान्यमिति नियमात्, करुणारसस्यैव भूयस्तरत्वादिति चेत्, सत्यम् । शृङ्गारवीरान्यतरस्याङ्गित्वं, अन्येषामङ्गत्वेन प्रवेशो यद्यपि, तथापि, ‘प्रधानं यो...वमुख्यता । अन्ये त्वङ्गानि शृङ्गारवीरौ तु प्रायिकौ क्वचित् ॥’ इति रूपकादशो...नाटकमित्येवानुग्राह्यमालङ्कारिकैः ॥ २ ॥ वशात् अधीनत्वात् । अयोध्यासंबन्धी आयोध्यिकः । तदानीम्भवश्च । एतेन पुराय...व्यावृत्तं तथैव प्रयोक्ष्यत इति तत्तत्पात्राभिनय...यो व्यज्यते । अये आश्चर्ये । ‘मङ्गलेऽपि च नान्दी’ इति रत्नमाला । विशेषेण श्रान्तानि चरणानि संचारा येषु । ‘संचारचरणं...चत्वरं राजाङ्गणम् । ‘हजारी’ इति महाराष्ट्राः । स्थानानि तदन्यस्थलानि । नटो मारिषः पारिपार्श्वकः । इति नाट्यपद्धतिः । भावस्तु...रिति हैमः । ‘भावुजी’ इति महाराष्ट्राः । ‘गृहाः पुंसि च भूम्न्येव’ इत्यमरः । यमेति मध्येति च ध्वनी । सभाजने आनन्दनविषये । उपस्थायिनः उप...एव सेवातत्परा इति यावत् । दिवसानिति काला-

---

१ ‘एषोऽहं’ इति घ. २ ‘कविवशात्’ इति न. ३ ‘तत्रभवतः’ इति व. ४ ‘पट्टाभिषेक’ इति न. ५ ‘असंहृतनान्दीकः’ इति न. ६ ‘प्रेषिता हि स्व०’ न–व. ७ ‘समाजोपस्थायिनो’ इति घ. ८ ‘दिगन्तपावना’ इति न–व. ९ ‘प्रमोद’ इति न.

**सूत्रधारः**—आं अस्त्येतन्निमित्तम्।

**नटः**—अन्यच्च।

> वसिष्ठाधिष्ठिता देव्यो गता राघवमातरः।
> अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम्॥ ३॥

**सूत्रधारः**—वैदेशिकोऽस्मीति पृच्छामि। कः पुनरसौ जामाता।

**नटः**—कन्यां दशरथो राजा शान्तां नाम व्यजीजनत्।
> अपत्यकृतिकां राज्ञे रोमपादाय यां ददौ॥ ४॥

विभाण्डकसुतस्तामृष्यशृङ्ग उपयेमे। तेन च सांप्रतं द्वादशवार्षिकं सत्रमारब्धम्। तदनुरोधात्कठोरगर्भामपि जानकीं विमुच्य गुरुजनस्तत्र गतः।

**सूत्रधारः**—तत्किमनेन। एहि राजद्वारमेव स्वजातिसमयेनोपतिष्ठावः।

**नटः**—तेन हि निरूपयतु राज्ञः सुपरिशुद्धामुपस्थानस्तोत्रपद्धतिं भावः।

**सूत्रधारः**—मारिष

> सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
> यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः॥ ५॥

**नटः**—अतिदुर्जन इति वक्तव्यम्।

---

ध्वनोरिति द्वितीया। **आः** कोपपीडयोः॥ **वसिष्ठाधिष्ठिता** इति ॥३॥ **वसिष्ठः अधिष्ठितः** पुरस्कृतः याभिः। **यज्ञे** सति॥ ३॥ **वैदेशिकः** विदेशस्थः। पारदेशिको विदेशस्थः॥ **कन्यां दशरथो राजेति** ॥४॥ **व्यजीजनत्** जनयामास **अपत्यकृतिकां** दुहितृप्रायां तदुदरजातामिव स्थितामिति यावत्। क... त्यमरमाला। शान्ता दशरथस्यापत्यं इत्येतत्पुस्तकान्तरपाठाभिप्रायकं युगान्तरविषयकं वा। अत एव शतमुखसहस्रमुखरावणकथेत्यौत्तराः। पृथक् कुम्भकर्णघातिनौ रामलक्ष्मणौ, इति रामायणभारतयोश्च इति दिक्॥ ४॥ **उपयेमे** विवहति स्म। द्वादशवर्षैक्रियमाणं **द्वादशवार्षिकम्**। **तदनुरोधात्** ऋष्यशृङ्गानुवर्तनात्। **कठोरः** पूर्ण इति यावत्। **राजद्वार**मिति ध्वनिः। राजगृहद्वारमिति भावः। **समयेन** मर्यादया। अत्र तुहिचादयः प्रायेण पादपूरणे वाक्यालङ्कारे वा यथोचितं ज्ञेयाः॥ **सर्वथा व्यवहर्तव्य** इति ॥५॥ **सर्वथा** सर्वप्रकारेण। **कुतः** कस्मात्। **साधुत्वे** शुद्धौ। 'साधु शुद्धौ रम्ये च' इति **हलायुधः**। **जनः** लोकः॥ ५॥ **दुर्मति**रिति अतिदुर्मतिरिति चौत्तराः पठन्ति॥

---

१ एतद्वाक्यं नास्ति न–घ–पुस्तकयोः. २ 'पुनर्जामाता' इति न–घ. ३ 'लोमपादाय' इति–ब–घ. ४ 'ताम्' इति न.

देव्यामपि हि वैदेह्यां सापवादो यतो जनः ।
रक्षोगृहस्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥ ६ ॥

सूत्रधारः—यदि पुनरियं किंवदन्ती महाराजं प्रति स्यन्देत ततः कष्टं स्यात् ।

नटः—सर्वथा ऋषयो देवताश्च श्रेयो[3] विधास्यन्ति । ( परिक्रम्य ) भो भोः क्वेदानीं महाराजः । ( आकर्ण्य ) एवं जनाः कथयन्ति—

स्नेहात्सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान् ।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद्विशति वासगृहं नरेन्द्रः ॥ ७ ॥

( निष्क्रान्तौ । )

प्रस्तावना ।

---

( ततः प्रविशत्युपविष्टो रामः सीता च । )

रामः—देवि वैदेहि, समाश्वसिहि । ते हि गुरवो न शक्नुवन्ति विहातुमस्मान् ।

किं त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ ८ ॥

---

दुर्जनत्वं दुर्मतित्वं वा क्रियातो वर्णयति–देव्या अपि हीति ॥ ६ ॥ वैदेह्याः कृते इति शेषः । 'देव्यां वैदेह्यां' इति च पाठः । हि प्रसिद्धौ । अपवादे अतिदुर्जनत्वं अतिदुर्मतित्वं वा उपपादयति—रक्ष इति । अग्नीति, पुरा युद्धकाण्डकृतायामित्यर्थः ॥ ६ ॥ प्रतिष्ठते प्राप्नोति इति यावत् । एवं वक्ष्यमाणोऽनुवाद इत्यर्थः ॥ स्नेहात्सभाजयितुमिति ॥ ७ ॥ सभाजयितुं रामं इति शेषः । विदेहान् देशान् । ध्वनिश्च । धर्मासनात् न्यायविचारसिंहासनात् । नरेन्द्रः रामः । एतेन कथोपक्षेपपात्रप्रवेशौ सूचितौ ॥ 'स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् । प्रस्तावना वा तत्र स्यात्' इति, 'नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि वा' इति लक्षणात् ॥७॥ इति प्रस्तावना ॥ किन्त्वनुष्ठाननित्यत्वमिति ॥८॥ नित्यत्वं नियमेन करणम् । स्वातन्त्र्यं स्वच्छन्दविहारम् । प्रत्यवायैः अकरणे प्रायश्चित्तैः । गृहस्थता गार्हस्थ्यम् । गृहपतित्वमिति यावत् । अग्निमन्त्र

---

१ 'रक्षोगृहे' इति ग. २ 'महाराजं प्रति स्पृशेत्' इति ब; 'महाराज स्पृशेत' इति च. ३ 'स्वस्ति करिष्यन्ति' इति ब. ४ 'नित्यत्वात्' इति ग.

**सीता**—जाणामि अज्जउत्त जाणामि । किंदु संदावआरिणो बन्धुअणविप्पओआ होन्ति । जानामि आर्यपुत्र जानामि । किं तु सन्तापकारिणो बन्धुजनविप्रयोगा भवन्ति ।

**रामः**—एवमेतत् । एते हि हृदयमर्मच्छिदः संसारभावा येभ्यो बीभत्समानाः संत्यज्य सर्वान्कामानरण्ये विश्राम्यन्ति मनीषिणः ।

प्रविश्य । **कञ्चुकी**—रामभद्र-( इत्यर्धोक्ते साशङ्कम् ) महाराज ।

**रामः**—( सस्मितम् । ) आर्य ननु रामभद्र इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य । तद्यथाभ्यस्तमभिधीयताम् ।

**कञ्चुकी**—देव ऋष्यशृङ्गाश्रमादष्टावक्रः संप्राप्तः ।

**सीता**—अज्ज तदो किं विलम्बीअदि । आर्य ततः किं विलम्ब्यते ।

**रामः**—त्वरितं प्रवेशय ।

( कञ्चुकी निष्क्रान्तः । )

प्रविश्य । **अष्टावक्रः**—स्वस्ति वाम् ।

**रामः**—भगवन्, अभिवादये । इत आस्यताम् ।

**सीता**—भअवं णमो दे । अवि कुसलं सजामादुअस्स गुरुअणस्स अज्जाए सन्ताए अ । भगवन् नमस्ते । अपि कुशलं सजामातृकस्य गुरुजनस्यार्यायाः शान्तायाश्च ।

**रामः**—निर्विघ्नः सोमपीथी[1] आवुत्तो[2] मे भगवानृष्यशृङ्ग आर्या च शान्ता ।

**सीता**—अह्मे वा सुमरदि । अस्मान् वा स्मरति ।

**अष्टावक्रः**—( उपविश्य ) अथ किम् । देवि कुलगुरुर्भगवान्वसिष्ठस्त्वामिदमाह—

---

गृहस्थस्य मुख्यो धर्म इति भावः । तथा च 'अग्निहोत्रफला वेदाः' इति भारते । अनुष्ठानेति ध्वनिः । 'अनुष्ठितानन्तरजे'ति भर्तृमीढ (प्र?) योगवत् क्षन्तव्यः ॥ ८ ॥ जानाम्यार्यपुत्र किन्तु सन्तापकारिणो भवन्ति गुरुजनविप्रयोगाः । अय्यउत्तेत्यत्र 'सर्वत्र लपराणं' इति रलोपः 'कगचजतदपयवानां प्रायो लोपः' इति पलोपश्च । अज्ज उत्तेति पाठे 'यस्य जः' इति जत्वम् । येभ्यः भोगेभ्यः । सर्वान् भोगान् ॥ प्रविश्य इति प्रवेशासूचनं प्रमादः ॥ किं विलम्ब्यते । नमस्ते। अपि कुशलं मे सजामातृकाय गुरुजनाय । जामाता ऋष्यशृङ्गः । जामादुअस्सेति कथनं कवेः प्रमादः । 'पितृभ्रातृजामातृणामरः' इत्यरादेशात्

---

१ 'सोमपीती' इति च-घ. २ 'भावुको' इति न. ३ 'वि' इति न-म.

विश्वम्भरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते।
तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयं च ॥ ९ ॥

तत्किमन्यदाशास्महे। केवलं वीरप्रसवा भूयाः।

रामः—अनुगृहीताः स्मः।

लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ १० ॥

अष्टावक्रः—इदं च भगवत्यारुन्धत्या देवीभिः शान्तया च भूयो भूयः सन्दिष्टम्। यः कश्चिद्गर्भदोहदो भवत्यस्याः सोऽवश्यमचिरात्सम्पादयितव्य इति।

रामः—क्रियते यदेषा कथयति।

अष्टावक्रः—ननान्दुः पत्या च देव्याः सन्दिष्टमृष्यश्रृङ्गेण—वत्से कठोरगर्भेति नानीतासि। वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः। तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्याम इति।

रामः—( सहर्षलज्जास्मितम्। ) तथास्तु। भगवता वसिष्ठेन न किंचिदादिष्टोऽस्मि।

अष्टावक्रः—श्रूयताम्।

---

जामाअरस्सेति कथनं युक्तम्। 'चतुर्थ्याः षष्ठीति' षष्ठीनिर्देशः। 'सोमपीथी तु सोमपाः' इत्यमरः। भगवान् माहात्म्यवान्। 'कीर्तिमाहात्म्ययोर्भगः' इति पदार्थमाला। आर्या च शान्तेति ध्वनिः। अस्मानपि स्मरति। अथ किं अङ्गीकारे। आह सेति शेषः॥ विश्वम्भरा भगवतीति ॥ ९ ॥ वधूः स्नुषा, सविता सूर्यः। गुरुः आदिकारणम्। वयं च गुरव इत्यूह्यम्। पुरोहिता इत्यर्थः। 'गुरुर्गीष्पतिपित्रादौ' इत्यमरः। कुलेषु वयमिति च पूजायां बहुत्वम्। भगवती प्रजापतिरिति च ध्वनिः॥ 'ध्रुवार्थे केवलं त्रिषु' इति नाममाला ॥९॥ वीरस्य पुत्रस्य प्रसवः प्रसूतिः यस्याः। 'वीरः पुत्रः' इति वेदनिघण्टुः ॥ लौकिकानां हि इति ॥ १० ॥ लौकिकानां अवैदिकानाम्। वाक्, आशीरूपा। आद्यानां मुख्यानाम्। 'ऋषयस्सत्यवचसः' इति, 'आद्यः प्रथममुख्ययोः' इत्यमरसारस्वतौ ॥ अनुवर्तते प्रतीक्षत इति माठरः ॥१०॥ इदं

---

१ 'गृहेषु' इति ब. २ 'अनुवर्तते' इति न. ३ 'गर्भदोहेदोदयो' इति न. ४ 'यदेषा' इति क–घ.

जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवं च राज्यम् ।
युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनं वः ॥११॥

रामः—यथा समादिशति[1] भगवान्मैत्रावरुणिः ।

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि ।
आराधनाय लोकानां[2] मुञ्चतो नास्ति मे व्यथा ॥ १२ ॥

सीता—अदो जेव्व राहवकुलधुरंधरो अज्जउत्तो । अत एव राघवकुलधुरंधर आर्यपुत्रः ।

रामः—कः कोऽत्र भोः । विश्राम्यतामष्टावक्रः ।

अष्टावक्रः—( उत्थाय परिक्रम्य च । ) अये कुमारलक्ष्मणः प्राप्तः । ( इति निष्क्रान्तः )

प्रविश्य । लक्ष्मणः—जयति जयत्यार्यः । आर्य तेन चित्रकारेणास्मदुपदिष्टमार्यस्य चरितमस्यां वीथिकायामभिलिखितम्[3] । तत्पश्यत्वार्यः ।

---

वक्ष्यमाणम् । देवीभिः कौसल्यादिभिरित्यर्थः । भूयोभूयः पुनः पुनः । 'पुनर्भृशार्थयोर्भूयः' इति संसारावर्तः 'भूयोभूयो नमाम्यहम्' इति प्राञ्चः । 'दौहृदं दोहदेऽपि स्यादिच्छायां गर्भकौतुके' इति विक्रमार्कः । यदि चेदित्यर्थः । ननान्दुः रामभगिनीत्वाच्छान्तायाः । पत्या भर्त्रा ॥ 'ननान्दा तु स्वसा पत्युः' इत्यमरः । ननान्दुरिति यथोक्तं तथेत्यर्थः ॥ जामातृयज्ञेन वयमिति ॥ ११ ॥ यज्ञेनेति तृतीया । वयमिति मातरोऽहमरुन्धती च सर्वे वयमित्यर्थः । बालः कुमारः युवैवेत्यर्थः । अत एव 'कौमारहरः शचीदेव्याः' इति नीलकण्ठः । 'बालः कुमारे च' इति शब्दमञ्जरी । युवा त्वमेवासि इति च पाठः । यत् यस्मात्कारणात् । वः रघूणां युष्माकम् । स्वस्मात् आत्मनोऽपि । यशः प्रजानुरञ्जनरूपम् । परमं शाश्वतम् । धनं तद्युक्तः स्याः इत्यर्थः । तथा च—'यौवनं धनसंपत्तिः प्रभुत्वम्' इति विषयत्रयं त्वयि जागर्ति । तस्मादविवेकता मास्तु, सावधानेन पथा संचरस्वेति भावः ॥११॥ 'वसिष्ठे च मैत्रावरुणिः' इति हारावली । अगस्त्य इति पूर्वोत्तरसन्दर्भमूढः कोऽपि बभ्राम ॥ स्नेहं दयां चेति ॥ १२ ॥ यदि वा अथवा 'आहो उताहो यदिवा' इति रत्नमाला । जानकीमपीत्यादीनि वचनानि रामस्य भाव्यर्थसूचकानीति तत्र तत्र सूक्ष्मबुद्धिभिरवगन्तव्यम् ॥१२॥ अत एव राघवकुलधुरन्धरः । राहवेत्यत्र 'अनादिनामसंयुक्तानां ख-घ-थ-ध-फ-भां हः' इति हत्वम् । 'श्रेष्ठौ धुर्यौ धुरन्धरौ' इति मेदिनी । 'आलेख्यं वीथिका

---

१ 'यथाह भगवान्' इति ब-घ. २ 'लोकस्य' इति न-ब-घ. ३ 'वीथ्याम्' इति क-न.

**रामः**—जानामि वत्स दुर्मनायमानां देवीं विनोदयितुम्। तत्कियन्त- मवधिं याचत्।

**लक्ष्मणः**—यावदार्याया हुताशने विशुद्धिः।

**रामः**—शान्तं पापम्। ( ससान्त्ववचनम् )

**उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।**
**तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः॥ १३॥**

देवि देवयजनसम्भवे प्रसीद। एष ते जीवितावधिः प्रवादः।

**कष्टो जनः कुलधनैरनुरञ्जनीय-**
**स्तन्नो यदुक्तमशिवं न हि तत्क्षमं ते।**
**नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा**
**मूर्ध्नि स्थितिर्न चरणैरवताडनानि॥ १४॥**

**सीता**—होदु अज्जउत्त होदु। एहि। पेक्खह्म दाव दे चरिदम्। भव- त्वार्यपुत्र भवतु। एहि। प्रेक्षामहे तावत्ते चरितम्। (इत्युत्थाय परिक्रामति।)

**लक्ष्मणः**—इदं तदालेख्यम्।

**सीता**—( निर्वर्ण्य। ) के एदे उवरि णिरन्तरट्ठिदा उवत्थुवन्ति विअ अज्जउत्तम्। क एते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम्।

**लक्ष्मणः**—देवि, एतानि तानि सरहस्यानि जृम्भकास्त्राणि यानि भगवतः कृशाश्वात्कौशिकमृषिमुपसंक्रान्तानि तेन च ताटकावधे प्रसादीकृता-न्यार्यस्य।

---

चित्रपट्टिका' इति **त्रिकाण्डशेषः**। **अवधिः** अवसानम्॥ **उत्पत्तिपरिपूतायाः** इति॥ १३॥ **पावनान्तरैः** पवित्रतापादकवस्तुभेदैः॥१३॥ देवानां यजनं यत्र। यज्ञभूमिरित्यर्थः। **जीवितं अवधौ** अवसाने यस्य यावज्जीवमि- त्यर्थः॥ **कष्टो जन** इति॥ १४॥ 'स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत्' **इत्यमरः**। **कुलधनैः** कुलीनैः। **नः** अस्माकम्। **यत् अशिवं** निष्ठु- रम्, **उक्तं** हुताशनशुद्धिरिति भाषितम्। **तत् ते** तव **न क्षमं** न योग्यम्। तुशब्दः पादपूरणे॥ अत्र दृष्टान्तमाह—**नैसर्गिकी** स्वभावसिद्धा॥१४॥ **आर्य- पुत्र पश्यामस्ते चरितम्**। चरिदं इत्यत्र 'तो दः' इति दत्वम्। **निर्वर्ण्य** दृष्ट्वा। क इदानीमेते उपरि निरन्तरस्थिताः उपस्तुवन्तीवार्यपुत्रम्। **ट्ठिदा** इत्यत्र 'स्थस्य ठः' इति ठत्वम्। थु(थु)वन्तीत्यत्र 'स्तस्य थः' इति थत्वं च।

---

१ 'कियानवधिः' इति न. २ 'पापम् ( ससान्त्ववचनम् )' इत्येतन्नास्ति च–पुस्तके; 'शान्तं शान्तम्' इति घ. ३ 'कष्टं' इति क, 'क्लिष्टो' इति न. ४ 'तन्मे' इति च; 'तन्मे दुरुक्तम्' इति घ. ५ 'अशुभं च न' इति न. ६ 'क्रामतः' इति व–घ. ७ 'भृशाश्वात्' इति न. ८ 'ऋषिं विश्वस्य मित्रं विश्वामित्रम्' इति व.

**रामः**—वन्दस्व देवि दिव्यास्त्राणि ।

**ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि ।**
**एतान्यपश्यन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥१५॥**

**सीता**—णमो एदाणं । नम एतेभ्यः ।

**रामः**—सर्वथेदानीं[1] त्वत्प्रसूतिमुपस्थास्यन्ति ।

**सीता**—अणुग्गहिदह्मि । अनुगृहीतास्मि ।

**लक्ष्मणः**—एष मिथिलावृत्तान्तः ।

**सीता**—अम्महे दलन्तणवणीलुप्पलसामलसिणिद्धमसिणसोहमाणमंसलेण देहसोहग्गेण विम्हअत्थिमिदताददीसन्तसोम्मसुन्दरसिरी अणादरखंडिदे[2]संकरसरासणो सिहण्डमुद्धमुहमण्डलो अज्जउत्तो आलिहिदो । अहो दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलेन देहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीरनादरखण्डितशङ्करशरासनः शिखण्डमुग्धमुखमण्डल आर्यपुत्र आलिखितः ।

**लक्ष्मणः**—आर्ये पश्य पश्य ।

**सम्बन्धिनो वसिष्ठादीनेष तातस्तवार्चति ।**
**गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १६ ॥**

---

**तानि** प्रसिद्धानि । **रहस्यैः** शरसन्धानमोक्षणोपसंहारादिमन्त्रैः **सहितानि जृम्भकानामस्त्राणि । मित्रं** सखायम् । **उपसंक्रान्तानि** प्राप्तानीति यावत् । **तेन** विश्वामित्रेण ॥ **ब्रह्मादय** इति॥१५॥**ब्रह्महिताय** ब्राह्मणसौख्याय। **स्वानि** स्वकीयानि ॥१५॥ **नम एतेभ्यः । त्वत्प्रसवं** त्वत्पुत्रम् । अनुगृहीतास्मि । **अम्हो** आश्चर्ये ॥ दलितनवनीलोत्पलश्यामलस्निग्धमसृणमांसलदेहसौभाग्येन विस्मयस्तिमिततातनगरजनदृश्यमानसोमसुन्दरश्रीः अनायासखण्डितशङ्करशरासनः शिखण्डमुग्धमण्डनः आर्यपुत्र आलिखितः । 'मसृणं स्निग्धं' **इत्यमरो**क्तेः स्निग्धमसृणयोरेकार्थता, तदपि अस्मद्याकृत**विद्धसालभञ्जिका**प्रथमाङ्कोक्तप्रणयप्ररूढप्रेमादीनामिव स्निग्धमसृणयोस्तत्तद्धातुमहिम्नाऽन्तरभेदो दयया कल्पनीयः। सर्वत्रैवमूह्यम्। **मांसलं** सान्द्रम् । **सोमवत् श्रीः शोभा** 'सोमवत्प्रियदर्शनः' इति **रामायणे** । **अनायासेन** लीलया । 'शिखण्डो वर्हचूडयोः' **इत्यमरः । खण्डिते**त्यत्र केचन शिवद्रोहिणः पापण्डाः परिहसन्तो दन्तान् दर्शयन्ति, तत्तुच्छम् ॥ रावणदुर्वहोऽपि शक्त्या हतो लक्ष्मणः यथा भक्ताय हनूमते लघुरभवत् तथा शिवलिङ्गप्रतिष्ठातेति 'अत्र पूर्वं महादेवः प्रसादमकरोत्प्रभुः' इत्यादिवचनेन **शिवगीतो**क्तविरजादीक्षानुग्रहेण च शिष्य-

---

१ 'सर्वथैतानि' इति क. २ 'खुटित' इति घ-च; 'त्थुडिद' इति न.

रामः—सुश्लिष्टमेतत् ।

जनकानां रघूणां च सम्बन्धः कस्य न प्रियः ।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥ १७ ॥

सीता—एदे क्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो विआहदिक्खिदा तुह्मे । अम्मो जाणामि तस्सिं जेव्व पदेसे तस्सिं जेव्व काले वत्तामि । एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता यूयम् । अहो जानामि तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्ते ।

रामः—एवम् ।

समयः स वर्तत इवैष यत्र मां
समनन्दयत्सुमुखि गौतमार्पितः ।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥ १८ ॥

लक्ष्मणः—इयमार्या । इयमप्यार्या माण्डवी । इयमपि वधूः श्रुतकीर्तिः।

सीता—वच्छ इअं वि अवरा का । वत्स इयमप्यपरा का ।

लक्ष्मणः—( सलज्जस्मितम् । अपवार्य ) अये ऊर्मिलां पृच्छत्यार्या । भवतु । अन्यतः संञ्चारयामि । ( प्रकाशम् ) आर्ये दृश्यतां द्रष्टव्यमेतत् । अयं च भगवान्भार्गवः ।

---

भक्तवात्सल्य रामस्य दयानिधिर्जगदीश्वरः खण्डनार्हविष्णुब्रह्माद्यवध्यरावणदुर्वहशरासनोऽभूदिति प्रामाणिकाः । अत एव 'बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि' इति भगवान् **बोधायनः** । 'श्रीमतः शितिकण्ठस्य कृत्यं हि दुरतिक्रमम्' इत्युत्तर**रामायणे** च विग्रहवद्धर्मस्य रामस्यैव वाक्यं इति दिक् । **सुतरां श्लिष्टं** युक्तमित्यर्थः ॥ **जनकानां रघूणा**मिति ॥१७॥ **यत्र** संबन्धे । तथा च 'जनक देहि कन्यां गृहाण राम' इति वक्तुं कारयितुं च स्वयं स एष एव सर्वस्वतन्त्र इति भावः ॥१७॥ एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारोऽपि भ्रातरो विवाहदीक्षिता यूयम् । **कालकृते**ति ध्वनिः । अम्हो जानामि तस्मिन्नेव काले वर्ते इति । एवं बाढमित्यर्थः ॥ **समयस्स वर्तत** इति ॥१८॥ **यत्र** समये । आदराद्गृहीतश्चासौ **कमनीयकङ्कण** इति विवेकः । अयमागृहीतेति ध्वनिः ॥ ॥ १८ ॥ **आर्या** सीता । **माण्डवी** भरतपत्नी **श्रुतकीर्तिः** शत्रुघ्नपत्नी । **इयमपरा का** । 'रहोऽन्येन सहोक्तौ स्यादपवार्य जनान्तिकम्' इति लक्षणात् प्रकृते अन्येन सह भाषणाभावात् कवेः प्रमादः । अथापि 'स्वमनसा

---

१ ˚द्रष्टव्यमेतत्' न-च; 'दृष्टमेतत्' इति घ. २ '˚मुद्गृहीत' इति च-घ. ३ 'सञ्चरामि' इति छ.

सीता—( ससंभ्रमम् ) कॅम्पिदह्मि । कम्पितास्मि ।

रामः—ऋषे नमस्ते ।

लक्ष्मणः—आर्ये पश्य पश्य । अयमसावार्येण ( इत्यर्धोक्ते )

रामः—( साधिक्षपम् ) अयि वत्स बहुतरं द्रष्टव्यम् । अन्यतो दर्शय ।

सीता—( सस्नेहबहुमानं निर्वर्ण्य । ) सुट्ठु सोहसि अज्जउत्त एदिणा विणअमाहॅप्पेण । सुष्ठु शोभसे आर्यपुत्र एतेन विनयमाहात्म्येन ।

लक्ष्मणः—एते वयमयोध्यां प्राप्ताः ।

रामः—( सास्रम् ) स्मरामि हन्त स्मरामि ।

जीवत्सु तातपादेषु नॅवे दारपरिग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ १९ ॥

इयमपि तदा जानकी

पॅतनविरलैः प्रान्तोन्मीलन्मनोहरकुॅन्तलै-
र्दशनमुकुलैर्मुग्धालोकं शिशुर्दधती मुखम् ।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृत मधुरैरम्बॅानां मे कुतूहलमङ्गकैः ॥ २० ॥

लक्ष्मणः—एषा मन्थरा ।

रामः—( सत्वरॅमन्यतो दर्शयन् । ) देवि वैदेहि

---

सह' इति दयया समाधेयम् । 'आत्मगतं स्वगतं' इति वा पाठः साधुः । **ऊर्मिला** लक्ष्मणस्य पत्नी । **भार्गवः** जामदग्न्यः । **कम्पितास्मि । साधिक्षेपमिति**—स्वोत्कर्षः परानुत्कर्षश्च न श्रोतव्य इति भावः । शोभते आर्यपुत्र एतेन विनयमाहात्म्येन । 'पाल्यमानानां' इति पाठः साधुः ॥ **जीवत्सु तातपादेष्विति** ॥ १९ ॥ **नः** अस्माकम् ॥ १९ ॥ **पतनविरलै**रिति ॥ २० ॥ सध्ये मध्ये दन्तानां **पतनेन विरलैः** गर्तसामन्तैरिति भावः । **मन्दः** स्वल्पः **आलोकः** द्योतः यस्मिन्मुखे । **ललितललितै**रिति वीप्सायां द्विरुक्तिः भृशं ललितैरित्यर्थः । **ज्योत्स्नाप्रायैः** चन्द्रिकाप्रचुरैः तद्वच्छीतलैः सुखकरैश्चेति भावः । **विभ्रमो** विलासः । **अकृत** चकार । **मधुरैः** मनोज्ञैः । **मुग्धा** सुन्दरीति **परिभाषः** । मूढेत्यर्थः । 'मुग्धस्तु-

---

१ 'भादम्हि' इति ख–घ. २ 'माहम्मेण' इति क. ३ 'नूतने दारसंग्रहे न.
४ 'पततु. इति ख–घ–ङ. ५ 'कच्छलैः' इति न. ६ 'अम्बानाम्' इति न.
७ 'अनुत्तरमन्यतो गत्वा' इति ख–घ.

इङ्गुदीपादपः सोयं शृङ्गबेरपुरे पुरा ।
निषादपतिना यत्र स्निग्धेनासीत्समागमः ॥ २१ ॥

लक्ष्मणः—( विहस्य । स्वगतम् । ) अये मध्यमाम्बावृत्तमन्तरितमार्येण ।

सीता—अम्मो एसो जडासंजमणवुत्तन्तो । अहो एष जटासंयमनवृत्तान्तः ।

लक्ष्मणः—पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम् ।
धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम् ॥ २२ ॥

सीता—एसा पसण्णपुण्णसलिला भअवदी भाईरही । एषा प्रसन्नपुण्यसलिला भगवती भागीरथी ।

रामः—देवि रघुकुलदेवते नमस्ते ।

तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसामर्षात्प्लुष्टान्पितुश्च पितामहान् ।
अगणिततनूतापं तप्त्वा तपांसि भगीरथो
भगवति तव स्पृष्टानद्भिश्चिरादुददीतरत् ॥ २३ ॥

सा त्वमम्ब स्नुषायामरुन्धतीव सीतायां शिवानुध्याना भव ।

---

न्दरमूढयोः' इति यादवः ॥ २० ॥ इङ्गुदीपादप इति ॥ २१ ॥ 'इङ्गुदी तापसतरुः' इत्यमरः । यत्र पादपे पादपप्रदेशे इत्यर्थः । यत्र शृङ्गिबेरपुरे इति केचित् । तन्न । सोऽयं पादप इति वाक्यविरोधात् । 'स्निग्धस्सुहृत्' इति वामनः ॥ २१ ॥ मध्यमाम्बा कैकेयी । उत्तमाम्बा नेति व्यज्यते । वृत्तं । वृत्तान्तं इति भ्रान्तः पाठः । वृत्तान्त इत्यमरः । अन्तर्हितमिति-मातृनिन्दा मा भूदिति भावः । एष जटासंयमनवृत्तान्तः ॥ पुत्रसंक्रान्तेति ॥ २२ ॥ यद्वृद्धेक्ष्वाकुभिरित्यादि सन्धिसङ्कटम् । अन्तर्ज्वलन्निटिलेति प्रावृड्ढ्रासरेति च असमद्याख्यातविद्धसालभञ्जिकाभारतचम्पूप्रयोगवद्द्रष्टव्यनीयम् । बाल्ये कौमारदशायाम् । आरण्यका वनवासिनः ॥ २२ ॥ एषा प्रसन्नपुण्यसलिला भगवती भागीरथी ॥ तुरगविचयव्यग्रेति ॥ २३ ॥ विचये अन्वेषणे । कपिल एव महः तेजः । तेन कर्त्रा । रोषाद्धेतोः ।

---

१ 'वृत्तान्तमन्तरितम्' इति न; 'वृत्तान्तोऽन्तरितः' इति क. २ 'कृतम्' इति घ. ३ 'आरण्यकं व्रतम्' इति घ–च. ४ 'रोषात्' इति न. ५ 'पुरा प्रपितामहान्' इति च–क; 'पितुः प्रपितामहान्' इति घ. ६ '°तनूतापः' इति न; 'तनूपातं' इति च–घ. ७ 'उददीधरत्' इति च–व; 'उदवीधरत्' इति क.

लक्ष्मणः—अयमसौ भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम ।

रामः—( सस्पृहमवलोकयति । )[1]

सीता—सुमरदि वा एदं पदेसं अज्जउत्तो । स्मरति वैतं प्रदेशमार्यपुत्रः।

रामः—अयि कथं विस्मर्यते ।

अलसललितमुग्धान्यध्वसम्पातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ २४ ॥

लक्ष्मणः—एष विन्ध्याटवीमुखे विराधसंरोधः ।

सीता—अलं दाव एदिणा । पेक्खामि दाव अज्जउत्तसहत्थधरिदतालवन्तादवत्तनिवारिदादपं अत्तणो दक्खिणारण्णप्पवेसारम्भम् । अलं तावदेतेन । प्रेक्षे तावदार्यपुत्रस्वहस्तधृततालवृन्तातपत्रनिवारितातपमात्मनो दक्षिणारण्यप्रवेशारम्भम् ।

---

सुप्तान् दग्धान् । **पितुः** भगीरथजनकस्य । **प्रपितामहान्** सगरपुत्रान् । **उदतीतरत्** उत्तारयामास ॥ २३ ॥ **अरुन्धतीव** स्थिता **सा** प्रसिद्धा त्वमिति ॥ अथवा—यथा अरुन्धती तथा सा त्वमित्यर्थः । **शिवं** मङ्गलं **अनुध्यानं** अनुचिन्तनं यस्याः । 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः' इत्यमरः ॥ स्मरति वा एनं प्रदेशमार्यपुत्रः । **अलसललितेति** ॥ २४ ॥ **यत्र** प्रदेशे **अध्वसम्पातखेदात् अलसानि** आलस्ययुक्तानि जडानीति यावत् । स्वभावतस्तु **ललितेन** विलासेन **मुग्धानि** मनोज्ञानीत्यर्थः ॥ 'संपाते चातिपतनगतिपातोऽप्यतिक्रमः ।' इति त्रिरूपः । **अशिथिलपरिरम्भैः** दृढालिङ्गनैः । **संवाहनं** मर्दनम् । अन्योन्यसंघट्टनवशादिति भावः । **परिमृदिताः** क्लिष्टाश्च ताः । 'मृणालं त्रिषु' इति विक्रमार्कः । 'पाणौ मृणालीलता' इत्यस्मद्याख्यात**विद्धसालभञ्जिकायाम्** । तस्मादितरविस्मरणेऽपि नेदं विस्मर्येत इति भावः ॥ २४ ॥ **अटवीमुखे** वनपुरःप्रदेशे ॥ अलमेतेन पश्यामि तावदार्यपुत्रस्वहस्तधारिततालवृन्तातप( त्र ? )निवारितातपं आत्मन अक्षिभ्यां दक्षिणारण्यपथिकत्वम् ॥ **तालवन्तेति** कवेः प्रमादः । 'ता-

---

१ एतन्नास्ति व–घ–पुस्तकयोः. २ 'सञात' इति व–घ–क. ३ 'संवादः' इति न. ४ 'अज्जउत्तहत्थ' इति व–घ. ५ 'तालवेण्टा०' इति घ; 'तालवेण्टादवत्तं' इति व; 'तालवुन्तादवत्तं' इति न. ६ 'अत्तणो अच्चाहिदं दक्खिणारण्णपहिअत्तणम्' इति न.

रामः—एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रिततरूणि तपोवनानि ।
येष्वातिथेयपरमा यमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥ २५ ॥

लक्ष्मणः—अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः सततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगो गिरिः प्रस्रवणो नाम ।

रामः—स्मरसि सुतनु तस्मिन्पर्वते लक्ष्मणेन
प्रतिविहितसपर्यासुस्थयोस्तान्यहानि ।
स्मरसि सरसनीरां तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि ॥ २६ ॥

किं च । किमपि किमपि मन्दं मन्दमासक्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ २७ ॥

लक्ष्मणः—एषा पञ्चवट्यां शूर्पणखा ।

---

लृन्तेऽथ' इत्यनुशासनात् 'तालओण्टे'ति कथनस्यैव न्याय्यत्वात् । 'अच्छिहिं' इति 'द्विवचने बहुवचनं' इति बहुत्वं 'अक्खिहिं' इति च प्रमादः । 'अक्ष्यादिषु छः' इति छत्वविधानात् 'अच्छिहिं' इति साधीयान् पाठः ॥ **एतानि तानीति** ॥ २५ ॥ **निर्झरिणीनां** गिरिनदीनाम् । **येषु** तपोवनेषु ॥ 'क्रमादातिथ्यातिथेयातिथ्यर्थेऽत्र साधुनि ।' इत्यमरः । **यमिनः** नियमवन्तः । **गृहिणः** गृहस्थाः ॥ २५ ॥ **अनोकहनिवहाः** तरुसङ्घाः । तैः **निरन्तरं** सान्द्रं यथा तथा, **स्निग्धनीलानि** मसृणानि श्यामलानि च तानि **परिसरारण्यानि** तैः परिसरारण्यायां सान्द्रायां **गोदावर्यां मुखराः** यस्य पूर्वानुभवस्मरणात् चित्रे मुखरकन्दरत्वोपचारः इति बोध्यम् । **अभिष्यन्दमानाः** प्रस्रवन्तः ये **मेघाः तैर्मेदुरितः** निबिडीकृतः **नीलिमा** नैल्यं यस्य ॥ **स्मरसि सुतन्विति** ॥ २६ ॥ **लक्ष्मणेन प्रतिविहितेत्या**दिकं 'रतेर्गृहीतानुनयेन' इतिवत्समाधेयम् । **वर्तितानि** वर्तनानीत्यर्थः । द्वितीयपादादौ यमकभङ्गः । सरसीति द्विः पुनरुक्तं च ॥ २६ ॥ **किमपि किमपीति** ॥ २७ ॥ **किमपि** अनिर्वाच्यं यथा तथा, **किमपि** किञ्चित् ।

---

१ 'शमिनो' इति ध-घ-क. २ 'मुखकन्दरः' इति न. ३ 'सरसवीराम्' इति ब-घ. ४ 'आसक्ति' इति क-घ. ५ 'एषः...शूर्पणखाविवादः' इति न.

सीता—हा अज्जउत्त एत्तिअं दे दंसणम्। हा आर्यपुत्र एतावत्ते दर्शनम्।

रामः—अयि विप्रयोगत्रस्ते चित्रमेतत्।

सीता—जहा तहा होदु। दुज्जणो असुहं उप्पादेइ। यथा तथा भवतु। दुर्जनोऽसुखमुत्पादयति।

रामः—हन्त वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति।

लक्ष्मणः—अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना

तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।

जनस्थाने शून्ये विकलकरणैरार्यचरितै-[1]

रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥२८॥

सीता—( सास्रमात्मगतम्। ) अयि देव रहुकुलाणन्द एव्वं मम कारणादो किलन्तो[2] आसि। अयि देव रघुकुलानन्द एवं मम कारणात्क्लान्त आसीः।

लक्ष्मणः—( रामं निर्वर्ण्य साकूतम्। ) आर्य किमेतत्।

---

ईषदिति यावत्। मन्दं मन्दं शनैः शनैः। आसक्तियोगात् अभिनिवेशसङ्गतेः। अविरलितौ मिथो नीरन्ध्रीकृतौ कपोलौ यस्मिन् कर्मणि। अक्रमेण मदनावेशपारवश्यात्पूर्वोत्तरसम्बन्धाभावेनेत्यर्थः। एकैकदोष्णोः परस्परभुजयोः। अविदिताः गतयामाः अतिक्रान्तप्रहराः यस्याः। रात्रिरेव व्यरंसीत् विरराम। न तु संलापैकदेशोऽपीति भावः ॥ २७ ॥ आर्यपुत्र एतावत्ते दर्शनम्। यथा तथा वा भवतु। दुर्जनः असुखमुत्पादयति ॥ अथेदं रक्षोभिरिति ॥ २८ ॥ अथानन्तरं इदमेतत्। अथेदमिति वाक्यखण्डः। वृत्तं आचरितम्। 'वृत्तमाचरितातीतपद्यचारित्रवर्तुले' इति केदारः। क्षालितं निश्शेषितमपि वृत्तमित्यनुषज्यते। शून्ये सजातीयरहिते। विकलकरणैः विवशेन्द्रियैः। आर्यस्य रामस्य चरितैः प्ररुदितरूपैरित्यर्थः। अत एव ग्रावा शैलोऽपि रोदिति प्रतिध्वनिव्याजेनेत्यूह्यम्। कृतोऽपि...न्येनाह—वज्रस्य कुलिशस्य। हृदयं गर्भः। दलति स्फुटति। अपिः संभावनायाम्। तथा च कदाचिदचलवज्रादीनां नाद्भवः (?) स्यात्। न तु तेषां दुरात्मनामासीदिति भावः। 'हृदयं हृदि गर्भे च' इति पंक्तिमाला ॥ 'हन्त रोदिति शैलोऽपि वज्रगर्भोऽपि दीर्यति। प्रकम्पतेऽपि दिग्धण्डमण्डलं रोदनैरिव ॥' इति महानाटके मेघनादोत्पत्तौ भगवान् बोधायनः ॥ २८ ॥ अन्हो दिनकरकुलनन्दनः एतावन्मम कारणात् क्लान्त आसीत्। एतावदिति क्रियाविशेषणम्। कारणात् हेतोः। निर्वर्ण्य

---

१ 'करणैः' ग-घ. २ 'कलिदोसि' इति ग-घ क.

अयं तावद्बाष्पस्त्रुटित इव मुक्तामणिसरो
विसर्पन्धारामिर्लुठति धरणीं जर्जरकणः।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति च भराध्मातहृदयः ॥ २९ ॥

रामः—वत्स

तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः।
दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां करोति ॥ ३० ॥

सीता—हद्धी हद्धी। अहं वि अदिभूमिं गदेण रणरणएण अज्जउत्त-सुण्णं विअ अत्ताणं पेक्खामि। हा धिक् हा धिक्। अहमप्यतिभूमिं गतेन रणरणकेनार्यपुत्रशून्यमिवात्मानं पश्यामि।

लक्ष्मणः—(स्वगतम्।) भवत्वन्यतः क्षिपामि। (चित्रं विलोक्य प्रकाशम्।) अथैतन्मन्वन्तरपुराणगृध्रराजस्य तत्रभवतस्तातजटायुपक्षविक्रमोदाहरणम्।

---

दृष्ट्वा ॥ अयं तावद्बाष्प इति ॥ २९ ॥ तावत् अलङ्कारे। मुक्तामणीनां मौक्तिकरूपरत्नानाम्, सरः एकावली। मुक्तामणीति पुनरुक्तं इति केचित् ॥ तन्न ॥ 'रत्नमणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' इति अमरसिंहेनाभिधानात् 'मौक्तिकमणिच्छायैः' इत्यसमाख्यातविरुद्धस्तालमञ्जिकायाम्। धरणी-मुद्दिश्य। धरणी इति च पाठः। धरणीतनयेति लक्ष्मणः। निरुद्धः आच्छा-दितोऽपि। 'आवेगो भयसंभ्रमः' इति अमरमाला। उन्नेतुं योग्यः उन्नेयः। आध्मातं पूरितं विफ(क?)लीकृतं हृदयं येन ॥ २९ ॥ तत्कालं प्रि-यजनेति ॥ ३० ॥ स चासौ कालः तत्काले प्रियजनस्य सीतायाः तीव्रः तीक्ष्णः प्रतिकृतिः रावणसंहाररूपः प्रतीकारः। विसोढः मर्षितः। वि-शेषेण पच्यमानः हृन्मर्मव्रणः हृदयग्रन्थिव्रणः। 'मर्म तु ग्रन्थिदोषयोः' इति रत्नकोशः ॥ ३० ॥ हा धिक् हा धिक् अहमप्यतिभूमिं गतेन रणरणकेन आर्यपुत्रशून्यमिवात्मानं पश्यामि। अतिभूमिं आधिक्यम्। रणरणकशब्दो भीतिसंभ्रमवाचको देशीयः। थ(घ)टकीति महाराष्ट्राः। 'चरित्रमपि चारित्रं' इत्युभयरूपः ॥ हा तात निर्व्यूढस्तेऽपत्यस्नेहः। निर्व्यूढः निर्वाहं

---

१ 'हे बाष्पौघः' इति ख-घ. २ 'चिरमाध्मात०' इति न. ९ 'तनोति' ख.

**सीता**—हा ताद णिव्वूढो दे अवच्चसिणेहो । हा तात निर्व्यूढस्तेऽपत्यस्नेहः ।

**रामः**—हा तात काश्यप शकुन्तराज क्व नु खलु पुनस्त्वादृशस्य महतस्तीर्थभूतस्य साधोः सम्भवः ।

**लक्ष्मणः**—अयमसौ जनस्थानस्य पश्चिमतः कुञ्जवान्नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभागः । तदिदमृष्यमूकपर्वते मतङ्गस्याश्रमपदम् । इयं च श्रमणा नाम सिद्धा शबरतापसी । तदेतत्पम्पाभिधानं पद्मसरः ।

**सीता**—एत्थ किल अज्जउत्तेण विच्छिण्णामरिसधीरत्तणं पमुक्ककण्ठं रुण्णं आसि । अत्र किलार्यपुत्रेण विच्छिन्नामर्षधीरत्वं प्रमुक्तकण्ठं रुदितमासीत् ।

**रामः**—देवि रमणीयमेतत्सरः ।

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
　व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
　सन्दृष्टाः कुवलयिनो भुवो विभागाः ॥ ३१ ॥

**लक्ष्मणः**—अयमार्यो हनूमान् ।

**सीता**—एसो सो चिरणिव्वूढजीअलोअपच्चुद्धरणगुरूवआरी महाणुभावो मारुदी । एष स चिरनिर्व्यूढजीवलोकप्रत्युद्धरणगुरूपकारी महानुभावो मारुतिः ।

---

गतः प्राणपर्यन्तमिति शेषः ॥ **तीर्थभूतस्य** गुरुप्रायस्य । **जनस्थानं पश्चिमतः** जनस्थानस्य पश्चिमभागे इत्यर्थः । **शबरेषु तापसी** शबरीत्यर्थः ॥ यत्र किल आर्यपुत्रेण विच्छिन्नामर्षधैर्येण प्रमुक्तकण्ठं प्ररुदितमासीत् । धीरमित्यत्र 'ई धैर्ये' इति, 'तुर्यधैर्यसौन्दर्याश्चर्यपर्यन्तेषु रः' इति च ईत्वं रत्वं च । रमणीयं इति ध्वनिः ॥ **एतस्मिन्मदकल** इति ॥ ३१ ॥ 'मलिना मल्लिकाक्षाः' इत्यमरः । तेषां पक्षैः **व्याधूतानि** कम्पितानि । **स्फुरन्ति** शोभमानानि **उरुदण्डानि** विपुलनालानि **पुण्डरीकाणि** येषु ते । **बाष्पाम्भसां पतनोदययोरन्तराले** अवान्तरदशायामित्यर्थः । **विभागाः** प्रदेशाः ॥ ३१ ॥ **अयमार्य** इति ध्वनिः ॥ एष स चिरनिर्व्यूढजीवलोकप्रत्युद्धरणगुरुकोपकारो महानुभावः **गुरुरेव गुरुकः** स्वार्थे कः । प्रत्युद्धरण-

---

१ 'तीर्थस्य' च–घ–क. २ 'जनस्थानपश्चिमः' घ–च. ३ 'कुञ्जवान्नाम पर्वतो' म. ४ 'तदिदममुष्य परिसरे' म. ५ 'सिद्धशबरी' घ–च ६ 'मया' म. ७ 'णिव्विण्ण' क–घ–च.

रामः—दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्धनः ।
यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥ ३२ ॥

सीता—वच्छ एसो कुसुमिदकअम्बतरुतण्डविअबरहिणो किंणामधेओ गिरि जत्थ अणुभावसोहग्गमेत्तपरिसेसधूसरसिरी मुहुत्तं मुच्छन्दो तुए परुदिएण अवलम्बिदो तरुअले अज्जउत्तो आलिहिदो । वत्स एष कुसुमितकदम्बतरुताण्डवितबर्हिणः किंनामधेयो गिरिर्यत्रानुभावसौभाग्यमात्रपरिशेषधूसरश्रीर्मुहूर्तं मूर्छंस्त्वया प्ररुदितेनावलम्बितस्तरुतल आर्यपुत्र आलिखितः ।

लक्ष्मणः—सोऽयं शैलः ककुभसुरभिर्माल्यवान्नाम यस्मिन्नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।
आर्येणास्मिन्

रामः—विरम विरमातःपरं न क्षमोऽस्मि
प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः ॥ ३३ ॥

लक्ष्मणः—अतः परमार्यस्य तत्रभवतां कपिराक्षसानां चासंख्यातान्युत्तरोत्तराणि कर्माश्चर्याणि । परिश्रान्ता चेयमार्या । तद्विज्ञापयामि विश्राम्यतामिति ।

सीता—अज्जउत्त एदिणा चित्तदंसणेण पच्चुप्पण्णदोहलाए अत्थि मए विण्णप्पं । आर्यपुत्र एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया अस्ति मम विज्ञाप्यम् ।

रामः—नन्वाज्ञापय ।

---

मेव गुरुकः विपुलः उपकारः यस्य सोऽयं शोभत इति शेषः ॥ दिष्ट्या सोऽयमित्यादि ॥ ३२ ॥ कृतिनः कुशलाः । कुशलानीति भुवनपक्षे ॥ ३२ ॥ वत्स एष कुसुमितकदम्बताण्डवितमयूरः किंनामधेयो गिरिः । यत्रानुभावसौभाग्यमात्रपरिशेषधूसरश्रीः मूर्छन् त्वया प्ररुदितेनावलम्बितस्तरुतले आर्यपुत्रः आलिखितः । कदम्बाः नीपवृक्षाः । मोरो इति वक्तव्ये मऊरो इति कथनं कवेः प्रमादः । तथापि शेषस्संस्कृतादि(ति) सूत्रेण दयनीयोऽयं प्रयोगः । प्रकृष्टं रुदितं यस्य ॥ सोऽयं शैल इति ॥ ३३ ॥ अतः आर्येणास्मिन् इति वाक्यात् परं अन्यत् वक्ष्यमाणम् श्रोतुमिति शेषः । सः अनिर्वाच्यः । प्रत्यावृत्तः आगत इवेत्यर्थः । तृतीयचरणे राम इति व्यवधाने सत्यपि नाटकादौ न दोषः इत्यालङ्कारिकाणां समयः । अत एव विक्रमचरिते—'देवाकर्णय' इति शुकवाक्यप्रस्तावान्तरे 'तिष्ठति पतगेति'

---

१ 'सुन्दरसिरी' न. २ एतन्नास्ति क–ध–घ–पुस्तकेषु. ३ 'वत्सैतस्माद्विरम' इति क–ध–घ. ४ 'पुनरपि' ध–घ. ५ 'विण्णावणिज्जं' क–ग.

सीता—जाणे पुणोवि पसण्णगम्भीरासु वणराइसु विहरिस्सं पवित्तणिम्मलसिसिरावगाहं भअवदिं भाईरहिं ओगाहिस्सं त्ति। जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्यामि पवित्रनिर्मलशिशिरावगाहां भगवतीं भागीरथीमवगाहिष्य इति।

रामः—वत्स लक्ष्मण।

लक्ष्मणः—एषोऽस्मि।

रामः—वत्स अचिरं सम्पादनीयोऽस्या दोहद इति संप्रत्येव गुरुभिः सन्दिष्टम्। तदस्खलितसुखसम्पातं रथमुपस्थापय।

सीता—अज्जउत्त तुम्हेहिं वि आअन्दव्वं। आर्यपुत्र युष्माभिरपि आगन्तव्यम्।

रामः—अयि कठिनहृदये एतदपि वक्तव्यमेव।

सीता—तेण हि पिअं मे पिअं मे। तेन हि प्रियं मे प्रियं मे।

लक्ष्मणः—यथाज्ञापयत्यार्यः। (इति निष्क्रान्तः।)

रामः—प्रिये अत्र वातायनोपकण्ठे मुहूर्तं संविष्टौ भवावः।

सीता—एवं होदु। ओहरिदम्हि क्खु परिस्समजणिदाए णिद्दाए। एवं भवतु। अपहृतास्मि खलु परिश्रमजनितया निद्रया।

रामः—तेन हि निरन्तरमवलम्बस्व मामनुगमनाय।

जीवयन्निव ससाध्वसश्रमस्वेदबिन्दुरधिकण्ठमर्प्यताम्।
बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः॥ २४॥
(तथा कारयन्सानन्दम्।) प्रिये किमेतत्।

---

भक्तिनाभिधानादिति दिक् ॥ ३३ ॥ यमार्येति ध्वनिः ॥ आर्यपुत्र एवेन प्रियदर्शनेन प्रत्युत्पन्नदौहृदायाः विज्ञाप्यं मेऽस्ति । दोहलाए इत्यत्र 'दौहृदे ल' इति लत्वम् ॥ जाने पुनरपि प्रसन्नगभीरासु वनराजिषु विहरिष्यामि । पवित्रनिर्मलो शिशिरावगाहां भगवतीं भागीरथीमवगाहिष्ये इति ॥ तत् तस्मात् । सम्पातः चक्रमज्जनादिना पार्श्वादिषु कुण्ठनमित्यर्थः । उपस्थापयेति ध्वनिः॥ आर्यपुत्र युष्माभिरप्यागन्तव्यम् । तेन हि प्रियं मे प्रियं मे । एवं भवतु । अपहृतास्मि खलु निद्रया । अनुगमनायेति ध्वनिः ॥ जीवयन्निवेति ॥ २४ ॥ चन्द्रमणयः चन्द्रकान्ताः । विभ्रमः विन्यासः । बाहुरधिकण्ठमर्प्यताम् अन्धवदिति ध्वनिः ॥ २४ ॥ तथेति—यथा सीता अधि-

---

१ 'सोम्म' क–घ–च. २ 'इतो वातायनावर्तके' घ–च. २ 'संविष्टा भव' न. ३ 'मामत्र शयनाय' क–घ–च.

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च संमीलयति च ॥ ३५ ॥

**सीता**—थिरप्पसादा तुम्हे इदो दाणिं किं अवरम् । स्थिरप्रसादा यूयमित इदानीं किमपरम् ।

**रामः**—म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि ।
एतानि ते सुवचनानि सरोरुहाक्षि
कर्णामृतानि मनसश्च रसायनानि ॥ ३६ ॥

**सीता**—पिअंवद एहि । संविसम्ह । ( इति शयनाय समन्ततो निरूपयति ) प्रियंवद एहि । संविशावः ।

**रामः**—अयि किमन्वेष्टव्यम् ।

---

कण्ठं बाहुमर्पयेत् तथेत्यर्थः ॥ अथ तमेव बाहुस्पर्शं त्रिच्छित्तिविशेषैरुल्लिखति ॥ **विनिश्चेतुं शक्य** इति ॥ ३५ ॥ विगतश्चासौ निश्चय इति व्युत्पत्तिबलाद्विनिश्चयशब्देन निश्चयभिन्नज्ञानं विवक्ष्यते । तथा च **विनिश्चेतुं** ज्ञातुं **न शक्य** इत्यर्थः । प्रथमचरणस्य मोक्ष इति भावः । अत एव सुखदुःखं वस्तु मोक्ष इति प्राञ्चः । **प्रमोहः** मूर्च्छातिशयः । **विसर्पः** व्याप्तिः । **मदो** मत्तता । 'बालोन्मत्तपिशाचवद्' इति स्मृतेः । अनेन द्वितीयचरणस्य ज्ञानाभाव इति भावः । **परि** परितः । **मूढः** स्वस्वकार्यविमुखः **इन्द्रियगणो** यस्मिन् । चेतनस्य भावः **चैतन्यं** जन्म । इदं कर्म ज्ञेयम् । 'प्राणी तु चेतनो जन्मी' इत्यमरः । भ्रमशाली संमोहशाली च करोतीत्यर्थः । भ्रमः भ्रान्तिः । 'आनन्दभ्रमयोस्संमोहः' इति **नाममाला** । उत्तरार्धे **विकारो** ज्ञानाभासात्मक इति भावः । एवमालोच्य अनिर्वचनीयं पारवश्यमनुभवामीति पद्यस्य पर्यवसन्नोऽर्थः । अयमेव कवेर्भावः । एवमादिष्वन्यल्पेषु पद्येषु स्वाज्ञानपराङ्मुखा दुर्विदग्धाः परस्परं शिखां बिभ्रतः कलहायन्ते । शिष्यमितोक्तावनसूयविशेषज्ञाः प्रमाणम् । इति दिक् ॥ ३५ ॥ प्रसन्नो वदसीति पूजाभिप्रायेणाह—**वी(स्थि ?)रेति** । स्थिरप्रसादा यूयमिति किमत्राश्चर्यम् । अत्र चाद्युक्तौ । 'तूर्यधैर्यसौन्दर्यपर्यन्तेषु रः' इत्यनेन 'अचेरं' इति

---

१ 'समुन्मीलयति' इति व. २ 'वीरप्रसादा यूयमत्रेदानीमाश्चर्यम्' न. ३ 'तानि सुवचनानि सरोरुहाक्ष्याः' वं. ४ 'सङ्घसं' ( शयिष्ये ) इति व–घ. ५ 'अपि सन्देष्टव्यम्' न.

आ विवाहसमयाद्गृहे वने शैशवे तदनु यौवने पुनः ।
स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते ॥ ३७ ॥

सीता—( निद्रां नाटयन्ती । ) अत्थि एदम् । अज्जउत्त अत्थि एदं ( इति स्वपिति । ) अस्त्येतदार्यपुत्र अस्त्येतत् ।

रामः—कथं प्रियवचना मे वक्षसि प्रसुप्तैव । ( निर्वर्ण्य )

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि[1] परमसह्यस्तु विरहः ॥ ३८ ॥

प्रविश्य । प्रतीहारी—देव उवट्ठिदो । देव उपस्थितः ।

रामः—अयि कः ।

प्रतीहारी—आसण्णपरिआरओ देवस्स दुम्मुहो । आसन्नपरिचारको देवस्य दुर्मुखः ।

रामः—( स्वगतम् ) शुद्धान्तचारी दुर्मुखः । स मया पौरजानपदेष्वप-सर्पः[2] प्रहितः । ( प्रकाशम् ) आगच्छतु ।

( प्रतीहारी निष्क्रान्ता । )

प्रविश्य । दुर्मुखः—( स्वगतम् ) हा कहं दाणिं देविं अन्तरेण ईदिसं अचिन्तणिज्जं जणाववादं देव्वस्स कहइस्सं । अहवा णिओओ क्खु मे एरिसो

वक्तव्ये 'अच्चरिअं' इति प्रमादः ॥ म्लानस्य जीवकुसुमस्येति ॥ ३६ ॥ जीवः असुधारणम् । विकासनानि विकासकराणि । इति यथोचितमूह्यम् । पद्येऽस्मिन् ममेत्यध्याहारः ॥ ३६ ॥ प्रियंवद एहि संविशावः । अपिः संभावनायाम् ॥ आ विवाहसमयादिति ॥ ३७ ॥ वने दण्डकावने । अस्यान्ततोऽन्वयः ॥ ३७ ॥ आर्यपुत्र एतदस्ति । निर्वर्ण्य दृष्ट्वा ॥ इयं गेहे लक्ष्मीरिति ॥ ३८ ॥ अमृतरूपा अञ्जनवर्तिरिति भावः । मसृणः स्निग्धः । अस्याः किं न प्रेयः सर्वं प्रेय इत्यर्थः । तु किन्तु । विरहो यदि विरहश्चेत् परं अत्यन्तम् । असह्यः ॥ ३८ ॥ देव उपस्थितः । विरह इति च पूर्वेणान्वयः । आसन्नपरिचारको देवस्य दुर्मुखः । शुद्धान्तं अन्तःपुरम् । अपसर्पः चारस्सन् ॥ हा कथमिदानीं सीतादेवीमन्तरेणेदृशमचिन्तनीयं जनापवादं देवाय कथयिष्यामि । अथवा नियोगः खलु मे मन्दभाग्यस्यैषः । हा आर्यपुत्र क्वासि । सौजन्यं चिन्तनेति यावत् ॥ सौजन्यं वर्णयति ॥

१ 'यदि पुनरसह्यो न' इति क-ख. २ 'जानपदानपसर्पितुं' ब-क-व.

मन्दभाग्यस्य । हा कथमिदानीं देवीमन्तरेण ईदृशमचिन्तनीयं जनापवाद देवाय कथयिष्यामि । अथवा नियोगः खल्वीदृशो मे मन्दभाग्यस्य ।

**सीता**—( उत्स्वप्नायते ) हा अज्जउत्त सोम्म कहिं सि । हा आर्यपुत्र सौम्य कुत्रासि ।

**रामः**—अये सैवेयं रणरणकदायिनी चित्रदर्शनाद्विरहभावना देव्याः स्वप्नोद्वेगं करोति । ( सस्नेहमङ्गमस्याः परामृशन् । )

> अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु य-
> द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
> कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं
> भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥ ३९ ॥

**दुर्मुखः**—( उपसृत्य । ) जेदु देवो । जयतु देवः ।

**रामः**—ब्रूहि यदुपलब्धम् ।

---

**अद्वैतं सुखदुःखयो**रिति ॥ ३९ ॥ **यत्** सुमानुषं सौजन्यम् । **सुख-दुःखयो**र्विषये । **अद्वैतं** द्वैविध्यरहितम् । एकमित्यर्थः । यच्छब्दचतुष्टयं सुमानुषपरामर्शीति बोध्यम् । **अवस्थासु** बाल्यकौमारयौवनजरासु यत् । **अनुगतं** अनुसारि । **विश्रामः** विश्रान्तिः । **यस्मिन्** सति । **जरसा** अपीति शेषः । जरयाऽपि । **रसः** प्रीतिः । शृङ्गारादिर्वा । **अहार्यः** अपरिहार्यः । **आवरणात्ययात्** सङ्केतापगमात् । **सारे** स्थिरांशे । **यत् स्थितं तस्य सुमानुष**स्येति भावप्रधानो निर्देशः । सौजन्यस्येत्यर्थः । कृते इति शेषः । अत एव, 'सुभगमपराद्धं' इत्यस्मद्व्याख्यातशाकुन्तले । 'मलिनं प्रमादि' इत्यस्मद्व्याख्यातविद्धसालभञ्जिकायां च । शोभनो मानुषो जनः येन सौजन्येन । तत् सुमानुषं इति वार्थः । 'मानुषो जनमर्त्ययोः' इति **नामनिधानम्** । **कथमपि** प्रयासेन । **तत्** प्रसिद्धम् । **एकं** मुख्यम् । **भद्रं** कल्याणम् । **प्राप्यते हि** प्रसिद्धौ ॥ तथा च मदनुरूपाया देव्याः सौजन्याय मङ्गलमाशास्यम् । मया तु दुर्मुखः पौरजानपदेषु विसृष्टः किमागत्य वक्ष्यति वेति भावः । 'विश्रामं भजतां' इति, 'विश्रामशाखिनं' इति च **कालिदास-मुरारि**प्रयोगवदमुष्य कवेः विश्राम इति प्रयोगः प्रामादिक इति प्रामाणिकाः । 'प्रतिसङ्कोचयोरावरणं' इति **संसारावर्तः** ॥ ३९ ॥ जयतु देवः । **उपलब्धं** ज्ञातम् । अनुभूतं वा । उपस्तुवन्ति देवं पौरजानपदाः । यथा विस्मृता वयं महाराजं दशरथं रामदेवेनेति ॥ **जानपदाः** देशवासिनः ।

---

१ 'ममैव' घ. २ 'अनुगुणं' च–घ–क. ३ 'प्रेमसारे' न. ४ 'प्रेम' व–घ.

दुर्मुखः—उवत्थुवन्ति देवं पोरजाणवदा विसुमराविदा अम्हे महाराअं दसरहं रामभद्देणेति । उपस्तुवन्ति देवं पौरजानपदा विस्मारिता वयं महाराजं दशरथं रामभद्रेणेति ।

रामः—अर्थवाद एषः । दोषं तु मे कञ्चित्कथय येन स प्रतिविधीयते ।

दुर्मुखः—( सास्रम् । ) सुणादु देओ । ( कर्णे । ) एव्वं विअ । शृणोतु देवः । एवमिव ।

रामः—अहह तीव्रसंवेगो वाग्वज्रः । ( इति मूर्छति )

दुर्मुखः—आस्ससदु देवो । आश्वसितु देवः ।

रामः—( आश्वस्य । ) हा हा धिक्परगृहवासदूषणं य-
द्वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
एतत्तत्पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रसृतम् ॥ ४० ॥

तत्किमत्र मन्दभाग्यः करोमि । ( विमृश्य सकरुणम् ) अथवा किमन्यत् ।

सतां केनापि कार्येण लोकस्याराधनं व्रतम् ।
यत्पूरितं हि तातेन मां च प्राणांश्च मुञ्चता ॥ ४१ ॥

संप्रत्येव च भगवता वसिष्ठेन सन्दिष्टम् । अपि च ।

यत्सावित्रैर्दीपितं भूमिपालै-
र्लोकश्रेष्ठैः साधु शुद्धं चरित्रम् ।
मत्सम्बन्धात्कश्मला किंवदन्ती
स्याच्चेदस्मिन्हन्त धिङ्मामधन्यम् ॥ ४२ ॥

---

अर्थवादः स्तोत्रपद्धतिः । किंचित्किञ्चिदिति च पाठः । येन कारणेन । शृणोतु देवः, एवमिव । निष्पेष इति च पाठः । आश्वसितु देवः । 'हा हेति खेदातिशये' इति रत्नमाला ॥ हा हा धिक् परेति ॥ ४४ ॥ तदेतत् आलर्कं रोगिश्वसम्बन्धि । 'अलर्कस्तु सरोगतः' इत्यमरः । प्रसृतं व्याप्तम् ॥ ४० ॥ सतां केनापीति ॥ ४१ ॥ तातेन दशरथेन ॥ सन्दिष्टमिति—'प्रजानामनुरञ्जने स्याः' इत्यष्टावक्रेण पूर्वोक्तमिति भावः ॥ ४१ ॥ यत्सावित्रैरिति ॥ ४२ ॥ तस्य चरित्रस्य । सम्बन्धाद्धेतोः । कश्मला तुच्छा । अस्मान् सवितृभूपालानुद्दिश्येत्यर्थः ॥ ननु अहमेव पापी न खलु सावित्राः सर्वेऽपि

---

१ 'महाराअदसरहस्स' च–घ–क. २ 'तीव्रोऽयं' न. ३ 'प्रसक्तम्' न. ४ 'किमध' न. ५ 'परम्'. च. ६ 'तत्प्रतीतम्' न; 'यत्पूजितं' च. ७ 'चित्रम्' न.

हा देवि देवयजनसम्भवे हा स्वजन्मानुग्रहपवित्रितवसुन्धरे हा निमिजनकनन्दिनि हा पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि हा राममयजीविते हा महारण्यवासप्रियसखि हा तातप्रिये हा स्तोकवादिनि कथमेवंविधायास्तवायमीदृशः परिणामः ।

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥ ४३ ॥

( दुर्मुखं प्रति । ) दुर्मुख ब्रूहि लक्ष्मणम् । एष ते नूतनो राजा रामः समाज्ञापयति । ( कर्णे । ) एवमेवम् ।

दुर्मुखः—हा कहं दाणिं अग्गिपरिसुद्धाए गब्भट्ठिदपवित्तसंताणाए देईए दुज्जणवअणादो एवं अणज्जं अज्झवसिदं देएण । हा कथमिदानीमग्निपरिशुद्धायै गर्भस्थितपवित्रसन्तानायै देव्यै दुर्जनवचनादेवमनार्यमध्यवसितं देवेन ।

रामः—शान्तम् । कथ दुर्जनाः पौरजानपदाः ।

इक्ष्वाकुवंशोऽभिमतः प्रजानां
जातं च दैवाद्वचनीयबीजम् ।
यच्चाद्भुतं कर्म विशुद्धिकाले
प्रत्येतु कस्तद्यदि दूरवृत्तम् ॥ ४४ ॥

तद्गच्छ ।

दुर्मुखः—हा देई । हा देवि । ( इति निष्क्रान्तः । )

रामः—हा कष्टम् । अतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः ।

---

दूष्या इत्याह—धिङ्मामिति ॥ ४२ ॥ 'नमो नमः शङ्करपार्वतीभ्यां' इत्यादिवत् वसिष्ठारुन्धतीति प्रयोगः क्षन्तव्यः। स्तोकवादिनि मितभाषिणि ॥ त्वया जगन्ति पुण्यानीति ॥ ४३ ॥ अनाथा निराधारा । 'आधाररप्रिययोर्नाथः' इति रभसः ॥ नूतनः निर्दय इति यावत् ॥ ४३ ॥ हा कथमग्निपरिशुद्धायै गर्भस्थितपवित्रसन्तानायै देव्यै दुर्जनवचनादिदमध्यवसितं देवेन । अध्यवसितं निश्चितम् ॥ इक्ष्वाकुवंश इति ॥ ४४ ॥ वचनीयं दूषणम् । प्रत्येति विश्वसिति । तत् अग्निकृतं सीतार्पणमि-

---

१ 'मुनिजनक' न. २ 'प्रियस्तोकवादिनि' व-घ. ३ पवित्तरहुउलसंताणाए' क-घ-व. ४ 'इदं ववसिदं' न. ५ 'शान्तं पापं शान्तं पापम् । दुर्जना नाम' न. ६ 'वंशोद्भवतः' व. ७ 'कस्तद्भयतिदूरवृत्तम्' क-घ-व.

शैशवात्प्रभृति पोषितां प्रियैः[1]
सौहृदादपृथगाश्रयामिमाम्[2] ।
छद्मना परिददामि मृत्यवे
सौनिको[3] गृहशकुन्तिकामिव ॥ ४५ ॥

तत्किमस्पर्शनीयः पातकी देवीं दूषयामि । ( इति सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन् । )

अपूर्वकर्मचण्डालमयि मुग्धे विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥ ४६ ॥

( उत्थाय । ) हन्त विपर्यस्तः संप्रति जीवलोकः । अद्यावसितं[4] जीवितप्रयोजनं रामस्य । शून्यमधुना जीर्णारण्यं जगत् । असारः संसारः । कष्टप्रायं शरीरम् । अशरणोऽस्मि किं करोमि का गतिः । अथवा हा अस्य

दुःखसंवेदनायैव रामे चैतन्यमाहितम्[5] ।
मर्मोपघातिभिः प्राणैर्वज्रकीलायितं हृदि ॥ ४७ ॥

अरुन्धति हा भगवन्तौ वसिष्ठविश्वामित्रौ हा भगवन्पावक हा देवि भूतधात्रि हा तात जनक हा तात हा मातः[7] हा प्रियसख सुग्रीव हा सौम्य हनूमन् हा परमोपकारिन् लङ्काधिपते विभीषण हा सखि त्रिजटे परिमुषिताः स्थ परिभूताः स्थ रामहतकेन । अथवा को नाम तेषामहमिदानीमाह्वाने[8] ।

---

स्यर्थः । दूरवृत्तं लङ्काद्वीपवृत्तम् । यदि संभावनायाम् ॥ ४४ ॥ शैशवादिति ॥ ४५ ॥ प्रियैः इष्टवस्तुभिः । छद्मना कैतवेन । मृत्यवे परित्यागरूपायेति सीतापक्षे । सौनिकः मृगपक्षिहिंसाशीलः ॥ ४५ ॥ अस्पर्शनीयः नीचः । दूषयामि अङ्गस्पर्शेनेति भावः ॥ अपूर्वकर्मेति ॥ ४६ ॥ अपूर्वं कैरप्येवं न कृतमित्यर्थः ॥ ४६ ॥ विपाकः परिणामः ॥ विपर्यस्तः व्यत्यस्तः । अवसितं अवसानं प्राप्तं शून्यं वस्तुरहितम् । जीर्णं शुष्कम् । अरण्यं वनम् ॥ दुःखसंवेदनायेति ॥ ४७ ॥ यस्मिन् संवेदनं ज्ञानम् । चैतन्यं जन्म । उपघातिभिः प्रहारिभिः कीलवत् शङ्कुवत् आचरितम् । प्राणव्याजाच्छङ्कवो हृदि निखाता इत्यर्थः । अत एवाद्यापि मयि चैतन्यं वर्तत इति भावः ॥ ४७ ॥ भूतधात्रि वसुधे । तात दशरथ । जनक वैदेह ।

---

१ 'प्रियाम्' ब–न–क. २ 'पृथगाशयां प्रियाम्' घ; 'पृथगाश्रयामिमाम्' घ. ३ 'सौनिके' न. ४ 'पर्यवसितमद्य' क; 'पर्यवसितं जीवित०' ब–घ. ५ 'आगतम्' न. ६ 'स्थिरैः' ब–घ. ७ 'मातरः' ब–घ–क. ८ 'कथं' ब–घ.

मुपनिमन्त्रिताः स्मः । तद्गङ्गातीरमातोद्यस्थानमुपगम्य क्रियतां समाज-संनिवेशः' इति । कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानसन्निवेशो मया । अयं तु—

राज्याश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रतः ।
वाल्मीकिगौरवादार्य इत एवाभिवर्तते ॥ १ ॥

( ततः प्रविशति रामः । )

**रामः**—वत्स लक्ष्मण अपि स्थिता रङ्गप्राश्निकाः ।

**लक्ष्मणः**—अथ किम् ।

**रामः**—इमौ पुनर्वत्सौ कुशलवौ कुमारचन्द्रकेतुसमां प्रतिपत्तिं लम्भयितव्यौ ।

**लक्ष्मणः**—प्रभुस्नेहप्रत्ययात्तथैव कृतम् । इदं चास्तीर्णं राजासनम् । तदुपविशत्वार्यः ।

**रामः**—( उपविशति । )

**लक्ष्मणः**—प्रस्तूयतां भोः ।

---

गङ्गाप्रवाहे निक्षिप्तवती इति तृतीयाङ्कविष्कम्भे तमसयोक्तम् । सलिलादुपैति इत्यग्रे लक्ष्मणवचसा स्फुटीभविष्यति चेति दिक् ॥ 'ततं वीणादिकम्' इत्यादि, 'वादित्रातोद्यनामकं' इत्यन्तममरः । 'वाजन्त्री' इति **महाराष्ट्राः** । **समाजः** सभा । मर्त्येति पूर्वमनुवादः । संप्रति स्वतः कथनमिति न पुनरुक्तिः ॥ **राज्याश्रमेति** ॥ १ ॥ **राज्यमेव आश्रमः** सौख्याभावादिति भावः । **कष्टं च तन्मुनिव्रतम्** । **वाल्मीकिना** वाल्मीकौ च **गौरवात्** ॥ १ ॥ 'रङ्गो नाट्यस्थलं' इति, 'सामाजिकः प्राश्निकः' इति च त्रिकाण्डशेषः । **प्रतिपत्तिः** मर्यादा । वात्सल्यमिति यावत् । **लम्भयितव्यौ** प्रापणीयौ । **प्रभोः स्नेहेन** । **प्रत्ययात्** विश्वासात् । कुशलवयोः भवति स्नेहेन अस्मदादीनामपि तयोर्विश्वासः अस्तीति भावः । **तथैव** चन्द्रकेतुवत् । कृतं वात्सल्यमिति शेषः । राजासनमास्तीर्णमिति कवेरिव कस्य न व्याकर्तुश्चातुर्यम् । 'नृपासनं यत्तद्भद्रासनं सिंहासनं च तत्' इत्यमरसिंहेनाभिहिततया सिंहासनस्यास्तरणत्वासंभवात् ॥ न च वाच्यमास्तरणोचितमन्यदासनं भवत्विति । तर्हि सभानायकस्य महाराजत्वे जगत्पते इति गङ्गया वक्ष्यमाणे वचसि चास्वरसापत्तेः । तस्माद्भटतरुमूलगुरुव्याख्यानमेव

---

१ 'तद्भागीरथीतीरमनोज्ञस्थानम्' ख. २ '°स्थानेषु रुक्मपत्रेशसङ्गो मया' च. ३ 'प्रेक्षकाः' क-घ-च. ४ '°सदृशीं स्थानप्रतिपत्तिम्' क-ङ-छ.

सूत्रधारः—( प्रविश्य । ) भो भो भगवान्भूतार्थवादी प्राचेतसः सस्थावरजङ्गमं जगदाज्ञापयति—यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं वचनामृतं करुणाद्भुतरसं च किंचिदुपनिबद्धं तत्र कार्यगौरवादवधातव्यमिति ।

रामः—एतदुक्तं भवति । साक्षात्कृतधर्माण ऋषयः । तेषाममृतम्भराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद्व्याहन्यन्त इत्यनभिशङ्कनीयानीति ।

( नेपथ्ये । ) हा अज्जउत्त हा कुमार लक्खण एआइणिं असरणं रण्णे आसण्णप्पसववेअणं हदासं सावदा मं अहिलसन्दि । साहं दाणिं मन्दभाइणी भाईरईए अत्ताणं णिक्खिविस्सम् । हा आर्यपुत्र हा कुमार लक्ष्मण एकाकिनीमशरणामरण्य आसन्नप्रसववेदनां हताशां श्वापदा मामभिलषन्ति । साहमिदानीं मन्दभागिनी भागीरथ्यामात्मानं निक्षेप्स्यामि ।

---

शरणमिति दिक्' ॥ **भूतार्थवादी** सत्यवस्तुवादी । 'भूतं त्रिपूचिते सत्ये' इति, 'अर्थोऽर्थनाविषययोर्धनकारणवस्तुषु' इति कपिलकेदारौ । 'कथयामि ते भूतार्थम्' इति अस्मद्व्याख्यातशाकुन्तले । प्रति उद्दिश्य **आर्षेण** अलौकिकेन । **वचनान्येव अमृतानि** यस्मिन् । **करुणश्चाद्भुतश्चासौ रसो** यस्मिन् । **किञ्चित्** चरितमिति शेषः । **कार्ये** प्रयोजने । आर्षप्रसादे इति भावः । **साक्षात्कृताः धर्माः** यैस्ते । साक्षात्कृतधर्माणः । 'न्यायाचारस्वभावेषु धर्मे पुण्ये जनस्थितौ' इति रत्नमाला ॥ 'वचसि स्थेयमस्माभिः सतां विदितधर्मणाम्' इति **लोलम्बः** । 'ऋषयस्सत्यवचसः' इत्यमरः । अमृतं बिभ्रति **अमृतम्भराणि** इति कवेः प्रमादः । तथापि-'वीणाऽस्तु सा काश्मयी प्रिये ते शृणोपि वाक्यान्यमृतम्भराणि ।' इति **श्रीनाथः** । **परोरजांसी**ति—यानि रजसः पराणि तानीत्यर्थः । शुद्धं अरजस्कम् । परोरज इति केदारः । 'प्रमादरहितं ज्ञानं प्रज्ञानम्' इत्यगस्त्यः । **अनभिशङ्कनीयानि** नाक्षेपोचितानि **इत्येतदुक्तं भवतीति** पूर्वेणान्वयः ॥ अथ अन्तर्नाटकपात्रभूतायाः लक्ष्मणपरित्यक्तायाः सीतायाः प्रवेशसूचनमारभते—**नेपथ्ये** इति । हा आर्यपुत्र हा कुमार लक्ष्मण एकाकिनीमशरणामासन्नप्रसवामरण्ये हताशाः श्वापदा अभिलषन्ति । हा इदानीं मन्दभागिनी आत्मानं भागीरथ्यां निक्षिपामि । 'अरण्यक' इति कवेः प्रमादः । 'लोपोऽरण्ये' इत्य-

---

१ पततानि क-घ-च-पुस्तकेषु. २ '°धर्माणो महर्षयः' क-ख-न. ३ 'अमृतसाराणि' क-ख-च. ४ 'इति नाभिशङ्कनीयानि' क; 'न हि शङ्कनीयानि' न. ५ 'हताशा' ( हताशाः ) टी.

**लक्ष्मणः**—( आत्मगतम् । ) कष्टं वताऽन्यदेव किमपि ।

**सूत्रधारः**—**विश्वंभरात्मजा देवी राज्ञा त्यक्ता महावने ।**
**प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥ २ ॥**

( इति निष्क्रान्तः । )

**प्रस्तावना ।**

---

**रामः**—( सावेगम् । ) देवि देवि लक्ष्मणमवेक्षस्व[1] ।

**लक्ष्मणः**—आर्य नाटकमिदम् ।

**रामः**—हा देवि दण्डकारण्यवासप्रियसखि एष ते रामाद्देवदुर्विपाकः[2] ।

**लक्ष्मणः**—आर्य दृश्यतां तावत्प्रबन्धार्थः ।

**रामः**—एष सज्जोऽस्मि वज्रमयः ।

( ततः प्रविशत्युत्सङ्गितैकैकदारकाभ्यां पृथिवीगङ्गाभ्यामवलम्बिता सीता । )

**रामः**—वत्स लक्ष्मण असंविज्ञातपदनिबन्धनमन्धतमसमिव[3] प्रविशामि धारय माम् ।

**देव्यौ**—

**समाश्वसिहि कल्याणि दिष्ट्या वैदेहि वर्धसे ।**
**अन्तर्जले[4] प्रसूतासि रघुवंशधरौ सुतौ ॥ ३ ॥**

**सीता**—( समाश्वस्य । ) दिट्ठिआ दारए पसूदम्हि । हा अज्जउत्त । दिष्ट्या दारकौ प्रसूतास्मि । हा आर्यपुत्र ।

---

नुशासनादकारलोपेन रण्णे इति संकथनस्य सामीप्यात् । अत एव 'रान' इति महाराष्ट्राः । 'श्वापदा हिंस्रजन्तवः' इति संसारावर्तः । **कष्टमिति**— यत्किञ्चिदुक्तं अन्यदारब्धमिति भावः । **विश्वम्भरात्मजेति** ॥ २ ॥ **विश्वम्भरायाः** भूमेः ॥ २ ॥ **प्रस्तावना** ॥ **सावेगं** सभयसंभ्रमम् । **लक्ष्मणमवेक्षस्वेति**–अहमपराधीति भावः । **नाटकमिदमिति**–पश्यतां भ्रमनिवारणायेति बोध्यम् । **उत्सङ्गितः** उत्सङ्गे कृतः **एकैकदारको** याभ्यामित्यर्थः । अत्र कुशलवौ गङ्गापृथिव्यौ सीता एतत्पात्रपञ्चकमन्तर्नाटकीयम् । तत्र भ्रमं विना तत्तदभिनयव्यवहारभाषणादिकं निपुणमतिभिरवगन्तव्यम् ॥ **पदनिबन्धनं** स्थानसम्बन्धः ॥ **समाश्वसिहि कल्याणीति**

---

१ 'क्षण°' क–घ; 'लक्ष्मण अवेक्षस्व' व. २ 'रामाद्विपाकः' न. ३ 'असंविज्ञातपदनिबन्धने तमसीवाहमद्य प्रविशामि' न. ४ 'अन्तर्जलम्' घ–व.

लक्ष्मणः—( पादयोर्निपत्य । ) आर्य आर्य दिष्ट्या वर्धामहे । कल्याणप्ररोहो रघुवंशः । ( विलोक्य । ) हा हा कथं क्षुभितबाष्पोत्पीडनिर्भरः प्रमुग्ध एवार्यः । ( वीजयति । )

पृथिवी—वत्से समाश्वसिहि ।

सीता—( समाश्वस्य । ) भअवदीओ का तुम्हे । मं मुञ्चह । भगवत्यौ के युवाम् । मां मुञ्चतम् ।

पृथिवी—इयं ते श्वशुरकुलदेवता भागीरथी ।

सीता—भअवदि णमो दे । भगवति नमस्ते ।

भागीरथी—चारित्रोचितां कल्याणसम्पदमधिगच्छ ।

लक्ष्मणः—अनुगृहीताः स्मः ।

भागीरथी—इयं तु जननी ते विश्वम्भरा ।

सीता—हा अम्ब ईदिसी अहं तुए दिट्ठा । हा अम्ब ईदृश्यहं त्वया दृष्टा ।

पृथिवी—एहि वत्से एहि पुत्रि ।

( उभौ आलिङ्गय मूर्च्छतः । )

लक्ष्मणः—( सहर्षम् ) दिष्ट्या गङ्गापृथिवीभ्यामभ्युपपन्नार्या ।

रामः—( अवलोक्य । ) दिष्ट्या खल्वेतत्करुणोत्तरं वर्तते ।

भागीरथी—अत्रभगवती विश्वम्भरापि नाम व्यथत इति जितमपत्य-

---

॥ ३ ॥ दिष्ट्या इदानीं प्रसूतास्मि( सि ? ) कल्याणौ शुभौ प्ररोहौ अङ्कुरौ सुतरूपौ यस्मिन् । क्षुभितानां जर्जराणां । बाष्पाणां उद्भेदः प्रादुर्भावः निर्भरः निरतिशयः यस्मिन् । प्रकर्षेण मुग्धः मूढः । भगवत्यौ के युवां मां मुञ्चतम् । भगवत्यौ इति संबोधनम् । भागीरथीत्वापादकं हेतुगर्भं नाम । भगवति नमस्ते ॥ हा अम्ब ईदृशी त्वयाऽहं दृष्टा ॥ मूर्च्छतः मुह्यतः । प्रेमावेशेनेति भावः ॥ आर्या सीता । अभ्युपपन्ना अनुगृहीता ॥ दिष्ट्या दैवात् । एतत् अभ्युपपादनं अनुग्रह इति यावत् । करुणो रसः उत्तरः अधिकः यस्मिन् । इदं एतदित्यस्य विधेयविशेषणं बोध्यम् ॥ अत्र सीताविषये । तथा च । एषा विश्वम्भरा । अस्याः सीतेव

---

१ 'भअवदि का तुमं इअं अ' ( का त्वम्, इयं च ) क–घ–ग. २ 'चारित्रोपक्लिप्तान्' घ–प. ३ 'करुणान्तं खल्वेतद्वर्तते' क–च–ए; 'करुणान्तरम्' न.

स्नेहेन । यद्वा सर्वसाधारणो ह्येष मानसो मोहग्रन्थिश्चेतनावतामुपप्लवैः संसारतन्तुः । देवि भूतधात्रि वत्से वैदेहि समाश्वसिहि समाश्वसिहि ।

पृथिवी—देवि सीतां प्रसूय कथमाश्वसिमि ।

सोढश्चिरं राक्षसमध्यवास-
स्त्यागो द्वितीयो हि सुदुःसहोऽस्याः ।

भागी०—को नाम पाकाभिमुखस्य जन्तो-
र्द्वाराणि दैवस्य पिधातुमीष्टे ॥ ४ ॥

पृथिवी—भगवति भागीरथि युक्तमेतत्सर्वं न वो रामभद्रस्य ।

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।
नाहं न जनको नाग्निर्नानुवृत्तिर्न सन्ततिः ॥ ५ ॥

सीता—हा अज्जउत्त सुमराविदम्हि । हा आर्यपुत्र स्मारितास्मि ।

---

कलत्पत्यानि वा तदपि व्यथते । अतः पत्युः( अपत्य ? )स्नेहेन जितमिति भावः ॥ **मानसः** मनस्संबन्धी । **मोहग्रन्थिः** ममतापाशः । 'ममता-मूर्छयोर्मोहः' इति, 'ग्रन्थिर्ना पर्वपाशयोः' इति वामनयादवौ । **चेतना-वतां** प्राणिनाम् । **'उपप्लव** उपद्रवे' इति ध्वनिमञ्जरी । गूढेत्यान्तर इति च द्विपदी प्रक्षिप्ता । **भूतधात्रि** इति भूवाचकं संबोधनम् ॥ **सोढश्चि-रमिति** ॥ ४ ॥ **सोढः** क्षान्तः । लङ्कायामिति भावः । हि प्रसिद्धौ । अहिस्सर्प इव **सुदुस्सह** इति एकपदं च । **पाकौ** सुखदुःखपरिणामौ तावुद्दिश्य **अभिमुखस्य** । 'पोते च परिणामे च पाकः' इति नानार्थमञ्जरी । **जन्तोर्विषये** । 'तस्य वा तस्य विषये' इति समयपद्धतिः । **दैवस्य** सुख-दुःखप्रापकविधेः । **द्वाराणि** प्रवेशमार्गान् । **पिधातुं** आच्छादयितुम् । **ईष्टे** समर्थो भवति । तथा च—'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् ॥' इति भावः । 'प्रवेशमार्गे च द्वारि छिद्रे च' इति धनञ्जयः ॥ ४ ॥ **न वो रामभद्रस्येति** भिन्नं वाक्यम् । **वः** युष्माकम् । रामभद्रस्य नेति युक्तमित्यनुषङ्गः । 'सीतालक्ष्मीर्भवान्विष्णुः' इति स्मारितत्वादिति भावः । तदेवाह—**न प्रमाणीकृत** इति ॥ ५ ॥ **अनुवृत्तिः** अनुवर्तनम् । **सन्ततिः** रघूणां वंशः । प्रमाणीकृत इति पदं सर्वत्र यथोचितमूह्यम्

---

१ 'मनसो मूढग्रन्थिरान्तरः' न; 'मनसो मोहग्रन्थिरन्तश्चरः' क–च; 'गूढग्र-न्थिरन्तश्चरः' घ. २ 'अनुपप्लवः' क–व–च. ३ 'एकश्चिरम्' च. ४ 'द्वितीयस्तु' न; 'द्वितीयश्च' क–घ–च. ५ 'जन्तुः' न–च. ६ 'मद्वदासुचम् । युक्तमेतद्वा रामभद्रस्य' क–घ–व; 'सर्वं वो रामभद्रस्य' न. ७ 'न तु वृत्तिः' न.

**पृथिवी**—आः कलत्रवार्येपुत्रः ।

**सीता**—( सलज्जास्रम् । ) जह वा अम्बा भणादि । यथा वाऽम्बा भणति ।

**रामः**—अम्ब पृथिवि, ईदृशोऽस्मि ।

**भागी०**—भगवति वसुन्धरे शरीरमसि संसारस्य । तत्किमसंविदानेव जामात्रे कुप्यसि ।

घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
  र्लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ।
इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
  कृत्स्नो लोकस्तदिति विषमे किं स वत्सः करोतु ॥ ६ ॥

**लक्ष्मणः**—अव्याहतान्तःप्रकाशा हि देवताः सत्त्वेषु ।

**भागी०**—तथाप्येष तेऽञ्जलिः ।

**रामः**—अम्ब अनुवृत्तस्त्वया भगीरथकुले प्रसादः ।

**पृथिवी**—देवि नित्यं प्रसन्नास्मि वः किं त्वापातदुःसहस्नेहसंवेगेनैवं ब्रवीमि । न पुनर्न जानामि सीतास्नेहं रामभद्रस्य ।

---

॥ ५ ॥ हा आर्यपुत्र स्मर्यसे । आः कोपे । यथाऽम्बा भणति । 'अम्बा माता गुरुवधूः श्वश्रूज्येष्ठप्रजापती' इति रत्नमाला । **शरीरमसि** शरीरमिव सर्वैः प्रार्थनीयासीत्यर्थः । सर्वाधारत्वादिति भावः ॥ **घोरं लोके विततमिति** ॥ ६ ॥ **विततं** विस्तृतम् । **श्रद्दधातु** दूरवृत्तत्वादिति भावः । **समाराधनीय इति यत् इदं इक्ष्वाकूणां कुलधनमित्यर्थः** । तद्वदावश्यकमिति यावत् । एतेन– 'लब्ध्वा ( ल्ब्वा ? ) कुलधनं राजा लङ्कां प्रायाद्विभीषणः ।' इत्यत्र यत् कैरपि यथेच्छं व्याकृतम्, तत्परास्तम् । **तत्** तस्मात् । **इति** पूर्वोक्तप्रकारेण । **विषमे** सङ्कटे ॥ ६ ॥ **सत्त्वेषु** निश्चयेषु । अथ गङ्गा भूमिं प्रत्याह–**तथापीति** । **ते** तुभ्यम् । **अञ्जलिः** मया क्रियत इति शेषः । **अनुवृत्तः** अनुष्ठाय वृत इत्यर्थः । असावित्यस्य अहमिति संप्रदायार्थः । अत एव असावागतोऽस्मीति विक्रमचरिते डिण्डिमः । **आपाते** आकर्णनक्षण एव **दुस्सहं** कौलीनं यस्यास्तादृशी चासौ सुता तस्यां **स्नेहस्य आवेगः** आसमन्ताद्वेगः आवेगस्तेनेत्यर्थः । 'दर्शनक्षण आपातत्यर्थवाकर्णनक्षणः' ।

---

१ 'त्वदिए' न–फ; 'तमपि विषमे' घ; 'नदनिगाहनम्' च. २ 'भूतेषु विशेषेण गङ्गा' घ–च. ३ एतदञ्जलगवाक्यं घ–च–पुस्तकयोः. ४ 'दुःसहः शोकावेगोऽस्त्यस्य न पुनर्न' च; 'किं त्वस्यापातदुःसहः स्नेहसंवेगः' न.

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः।
लोकोत्तरेण सत्त्वेन[1] प्रजापुण्यैश्च जीवति ॥ ७ ॥

रामः—सकरुणा हि गुरवो गर्भरूपेषु।

सीता—( रुदती कृताञ्जलिः। ) णेदु मं अत्तणो अङ्गेसु विलअं अम्बा। नयतु मामात्मनोऽङ्गेषु विलयमम्बा।

रामः—किमन्यद्ब्रवीतु।

भागी०—शान्तम्। अविलीना संवत्सरसहस्राणि भूयाः।

पृथिवी—वत्से अवेक्षणीयौ ते पुत्रकौ।

सीता—अणाधम्हि। किं एदेहिं। अनाथास्मि। किमेताभ्याम्।

रामः—हृदय वज्रमसि[2]।

भागी०—कथं त्वं[3] सनाथाप्यनाथा।

सीता—केरिसं मम अभग्गाए सणाहत्तणम्। कीदृशं मे अभाग्यायाः सनाथत्वम्।

देव्यौ—जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे।
आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते ॥ ८ ॥

लक्ष्मणः—आर्य श्रूयताम्।

रामः—शृणोतु लोकः।

( नेपथ्ये कलकलः। )

रामः—अद्भुततरं किमपि।

सीता—किंत्ति आवद्धकलकलं[4] अन्तरिक्खं पज्जलदि। किमित्यावद्धकलकलमन्तरिक्षं प्रज्वलति।

---

इति, 'कौलीनं लोके च' इति केदारहैमौ। अत एव 'अद्यमापातमधुरम्' इति सार्वभौमः। सीतायां स्नेहम्। 'धैर्ये सत्त्वं' इति जयः॥ दह्यमानेन मनसेति ॥ ७ ॥ प्रजानां पुण्यैः ॥ ७ ॥ गर्भाणामिव रूपं आकृतिः येषां अस्मास्विति शेषः॥ नयतु मामात्मनोऽङ्गेषु विलयमम्बा। 'अन्तर्धाने च विलयः' इत्यमरसत्वः। अविलीना अनष्टा। किमेताभ्यामनाथाभ्याम्। वज्रमिति- एवमश्लीलश्रवणादिति भावः। कीदृशं मे अभाग्यायाः सनाथत्वम्। 'नाथस्तातपतिस्वामिदेवाधारेष्वपि' इति नन्दी॥ जगन्मङ्गलमिति ॥ ८ ॥ यत् यस्मात् आवयोः। सङ्गात् सङ्गतेः। प्रकृष्यते अवि-

---

१ 'धैर्येण' व. २ 'वज्रमयम्' क-घ-व. ३ 'कथं वत्सौ सनाथावप्यनाथौ' न. ४ एतन्नास्ति क-घ-व-पुस्तकेषु.

**रामः**—हा प्रिये लोकान्तरं गतासि ।

**सीता**—णेदु मं अत्तणो अङ्गेसु विलअं अम्बा । ण सहिस्सं ईरिसं जीअलोअपरिभवं अणुभविदुं । नयतु मामात्मनोऽङ्गेषु विलयमम्बा । न सहिष्ये ईदृशं जीवलोकपरिभवमनुभवितुम् ।

**रामः**—किमुत्तरं स्यात् ।

**पृथिवी**—मन्नियोगतः स्तन्यत्यागं यावत्पुत्रयोरवेक्षस्व । परेण तु यथा रोचिष्यते तथा करिष्यामि ।

**भागी०**—एवं तावत् ।

( इति निष्क्रान्ते देव्यौ सीता च । )

**रामः**—कथं विलय एव वैदेह्याः सम्पन्नः । हा देवि दण्डकारण्यवास-प्रियसखि हा चारित्रदेवते लोकान्तरं पर्यवस्थितासि । ( मूर्छति )

**लक्ष्मणः**—भगवन्वाल्मीके परित्रायस्व परित्रायस्व । एष ते काव्यार्थः ।

( नेपथ्ये । ) अपनीयतामातोद्यम् । भो भो सजङ्गमस्थावराः प्राण-भृतो मर्त्यामर्त्याः पश्यतेदानीं महर्षिणा भगवता वाल्मीकिनाऽभ्यनुज्ञातं पवित्रमाश्चर्यम् ।

---

तथा चात्र रसातलप्रवेशादिकमतीतं चरितं गर्भनाटकव्याजेन दर्शितम् ॥ एतौ हीति पद्यस्थविशेषपञ्चकं प्रपञ्चितम् । वाल्मीकिसमाश्रयचन्द्रकेतुसमरार-भटीरामभद्रसंलापगुणादिविशिष्टं कुशलवयोः कौमारप्रकरणं तदिदं नाटक-गर्भनाटकात्मना द्विकोटिकं कविचमत्कृतं संविधानरहस्यनारिकेलगतुलमतिशि-लातले स्फोटितवानहम् । शिष्यशिशुरनसूयाप्रगुणगुणगणिग्रहयालुभिरनुग्राह्य इति दिक् ॥ लोकान्तरं ध्वनिः ॥ नयत्वात्मनोऽङ्गेषु विलयमम्बा न सहिष्ये रात्रिंदिवं जीवलोकपरिभवमनुभवितुम् । जीवयुक्तलोकेषु भुवनेषु । 'जीव-स्तत्त्वे' इति कपिलः । परिभवं तिरस्कारम् । नियोगतः शासनात् । परेण वयसेति शेषः । प्रतिपदं ज्ञातमेव अन्तर्नाटकमिति शेषः । 'तावच साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । चरित्रेण देवतेत्यर्थः । न मानुषीति भावः । एष ते काव्यार्थः तिष्ठत्विति भावः । एतावत्पर्यन्तं गर्भनाटकमिति सूक्ष्मदृग्भिर्बोध्यम् ॥ प्रकृतमनुसरति—नेपथ्ये इति ॥ आ-तोद्यं चतुर्विधवाद्यम् । प्राणभृत इति—अनन्यगत्या ससनादप्रारम्भप्रपनप्र-

---

१ 'परिवत्तं' ( परिनतं ) क–घ–प. २ 'कथं प्रतिपन्न एव तावत् । हा चारि-त्रदेवते लोकान्तरे पर्यवसितासि' न. ३ 'एष किं ते काव्यार्थः' प.

लक्ष्मणः—( विलोक्य । ) मन्थादिव क्षुभ्यति गाङ्गमम्भो
व्याप्तं च देवर्षिभिरन्तरिक्षम् ।
आश्चर्यमार्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुदेति ॥ १६ ॥

पुनर्नेपथ्ये । अरुन्धति जगद्वन्द्ये गङ्गापृथ्व्यौ जुषस्व नौ ।
अर्पितेयं तवावाभ्यां सीता पुण्यव्रता वधूः ॥ १७ ॥

लक्ष्मणः—अहो आश्चर्यमाश्चर्यम् । आर्य पश्य पश्य । ( विलोक्य ) कष्टमद्यापि नोच्छ्वसित्यार्यः ।

( ततः प्रविशत्यरुन्धती सीता च । )

अरुन्धती—त्वरस्व वत्से वैदेहि मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं सौम्यस्पर्शेन पाणिना ॥ १८ ॥

सीता—( ससंभ्रमं स्पृशन्ती ) समस्ससदु समस्ससदु अज्जउत्तो । समाश्वसितु समाश्वसित्वार्यपुत्रः ।

रामः—( समाश्वस्य सानन्दम् ) भोः किमेतत् । ( दृष्ट्वा सहर्षाद्भुतम् । ) कथं देवी । ( सलज्जम् । ) अये अम्बा मे अरुन्धती सर्वे च प्रहृष्यन्त ऋष्यशृङ्गशान्तादयोऽस्मद्गुरवः ।

अरुन्धती—वत्स एषा भगवती भगीरथगृहदेवता सुप्रसन्ना गङ्गा । नेपथ्ये । जगत्पते रामचन्द्र स्मर्यतामालेख्यदर्शने मां प्रत्यात्मनो वचनं यथा सा त्वमम्ब स्नुषायामरुन्धतीव सीतायां शिवानुध्याना भवेति तत्रानृणास्मि जाता ।

---

विष्ठलक्ष्मणकृतानुवादबलेन च प्राणभृच्छब्दः तिर्यगुरगादियाचक इति विवक्षितः । प्राणाः असवः प्राणशक्तिर्वा । 'शक्तिः प्राणे' इत्यमरः । पश्यन्त्विति—भवन्त इति शेषः ॥ मन्थादिव क्षुभ्यतीति ॥ १६ ॥ मन्थो मन्थनम् । आर्या सीता ॥ १६ ॥ अरुन्धतीति ॥ १७ ॥ गङ्गापृथिव्यौ नौ च द्वितीयाद्विवचनम् । उद्दिश्येति शेषः । जुषस्व प्रियस्व । तव हस्ते इति शेषः ॥ १७ ॥ त्वरस्व वत्से इति ॥ १८ ॥ शालीनं अधृष्टम् । शीलं स्वभावः यस्याः । 'अधृष्टे तु शालीनः' इत्यमरः । सौम्यः सुकरः स्पर्शः यस्य । यमेति ध्वनिः ॥ १८ ॥ समाश्वसितु आर्यपुत्रः । गङ्गा प्राह जगत्पते इति । सा प्रसिद्धा त्वं अरुन्धतीव स्नुषायां सीतायां, शिवं अनुध्यानं अनुसरणपूर्वकं स (?) वात्सल्यमिति यावत् । ध्यानं चिन्तनं यस्याः ॥

---

१ 'उपैति' न. २ 'भजस्व' न. ३ 'तवाभ्यासे' व. ४ 'प्रिय' कु-घ-क-

अरुन्धती—इयं ते श्वश्रूर्भगवती वसुन्धरा।

पुनर्नेपथ्ये। उक्तमासीदायुष्मता वत्सायाः परित्यागे यथा भगवति वसुन्धरे श्लाघ्यां दुहितरमवेक्षस्व जानकीमिति। तदधुना कृतवचनास्मि प्रभोर्वत्सस्येति।

रामः—कथं कृतमहापराधो भगवतीभ्यामनुकम्पितः। प्रणमामि वः।

अरुन्धती—भो भोः पौरजानपदाः, इयमधुना भगवतीभ्यां वसुन्धराजाह्नवीभ्यामेवं प्रशस्यमाना ममारुन्धत्याः समर्पिता पूर्वं च भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा सब्रह्मकैश्च देवैः संस्तुता सावित्रकुलवधूर्देवयजनसम्भवा सीतादेवी परिगृह्यतामिति कथमिह भवन्तो मन्यन्ते।

लक्ष्मणः—आर्य एवमार्ययारुन्धत्या निर्भर्त्सिताः पौरजानपदाः कृत्स्नश्च भूतग्राम आर्यां नमस्कुर्वन्ति। लोकपालाः सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते।

अरुन्धती—जगत्पते रामचन्द्र

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम्।
हिरण्मय्याः प्रतिकृतेः पुण्यंप्रकृतिमध्वरे॥ १९॥

सीता—( स्वगतम्। ) जाणादि अज्जउत्तो सीदाए दुक्खं पडिमज्जिदुम्। जानात्यार्यपुत्रः सीताया दुःखं परिमार्ष्टुम्।

रामः—यथा भगवत्यादिशति।

लक्ष्मणः—कृतार्थोऽस्मि।

सीता—पच्चुज्जीविदम्हि। प्रत्युज्जीवितास्मि।

---

वसुन्धरा प्राह–उक्तमिति **वत्सायां** सीतायां विषये। **प्रभोः** तव। **कृतं वचनं** यया सा॥ इत्थं रामेण गङ्गावसुन्धरे प्रथमाङ्के संप्रार्थिते। तदेतद् द्वयं दीर्घदर्शिभिरवगन्तव्यम्। **अरुन्धत्येति**–स्वेन स्वनामग्रहणं माहात्म्यद्योतकम्। अत एव–'स्थितमिव नगरे राक्षसानां सहस्रम्' इति **मुद्राराक्षसीये** 'दुर्योधनकेसरीन्द्रगृहिणी' इति **वेणीसंहारे** च। **वैश्वानरेण** अग्निना। **लोकपालाः** इन्द्राद्याः॥ **नियोजय यथेति**॥ १९॥ धर्ममनतिक्रम्य **यथाधर्मम्**। **प्रतिकृतेः** प्रतिमायाः। **पुण्या** चासौ **प्रकृतिः** तां प्रधानमित्यर्थः। 'प्रधानं प्रकृतिः स्त्रियाम्' इत्यमरः। 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभौ' इति स्मरणात्॥ १९॥ जानाति आर्यपुत्र सीतादुःखं प्रमार्ष्टुम्। प्रत्युज्जीवि-

---

१ 'कृतापराधोऽपि भगवति त्वयानुकम्पयितव्यो रामः प्रणमति' न. २ 'पुण्यां प्रकृतिम्' क—न.

**लक्ष्मणः**—आर्ये एप निर्लज्जो लक्ष्मणः प्रणमति ।

**सीता**—वच्छ[1]सरिसो तुमं चिरं जीअ । वत्ससदृशस्त्वं चिरं जीव ।

**अरुन्धती**—भगवन्वाल्मीके उपनीयेतामिमौ सीतागर्भसम्भवौ रामभद्रस्य पुत्रकौ कुशलवौ । ( इति निष्क्रान्ता । )

**रामलक्ष्मणौ**—दिष्ट्या तथैवैतत् ।

**सीता**—( सबाष्पाकुला ) कहिं ते पुत्तआ मे । कुत्र तौ पुत्रकौ मम ।

( ततः प्रविशति वाल्मीकिः कुशलवौ च । )

**वाल्मीकिः**—वत्सौ कुशलवौ एप वां रघुपतिः पिता । एप लक्ष्मणः कनिष्ठतातः । एषा सीता जननी । एप राजर्षिर्जनको मातामहः ।

**सीता**—( सहर्षकरुणाद्भुतं विलोक्य । ) कहं तादो । कथं तातः ।

**कुशलवौ**—हा तात हा अम्ब हा मातामह ।

**रामलक्ष्मणौ**—( सहर्षमालिङ्ग्य । ) ननु वत्सौ पुण्यैः प्राप्तौ स्थः ।

**सीता**—एहि जाद कुस एहि जाद लव चिरस्स परिस्सजह मं लोअन्त[2]रगदं जणणिं । एहि जात कुश एहि जात लव चिरस्य परिष्वजेथां मां लोकान्तरगतां जननीम् ।

**कुशलवौ**—( तथा कृत्वा ) धन्यौ स्वः ।

**सीता**—भअवं एसा हं पणमामि । भगवन्, एपाहं प्रणमामि ।

**वाल्मीकिः**—वत्से ईदृश्येव चिरं भूयाः ।

---

तास्मि । वत्ससदृशो मे चिरं जीव । **वत्सयोः** कुशलवयोः **सदृशः** समानः । 'ज्येष्ठभ्राता पितृसमः' इति स्मृतेः । सदृशो मे इति ध्वनिः । **रामभद्रस्य सीतागर्भे संभूतौ कुशलवौ उपनय** समीपमानय, णीञ् प्रापणे । ध्वनिश्च । **तथैव तत्** उपनयेति...... । **पुत्रकौ** वत्सौ संबोधनम् । **वां** युवयोः । **आकूतं** अभिप्रायः । कथं तातः । 'हर्षाश्चर्याद्भुतेपु हा' इति कपिलः । एहि जात कुश एहि जात लव चिरस्य परिष्वजस्व मां लोकान्तरगतां जननीम् । भगवन् । प्रणमामि । इत्थमिति-पतिपुत्रसमेतेति यावत् । रावणविनाशहेतुश्चेत्यर्थः । 'संभवामि युगे युगे' इति भगवद्वचनात् ॥ अद्यहे तातः

---

१ 'वच्छ ईदिसो' ( वत्स ईदृशः ) क-घ-च-न. २ 'लोअन्दराओ आअदं' ( लोकान्तरादागताम् ) न.

सीता—अम्महे तादो कुलगुरु अज्जाअणो सभत्तुआ अज्जा सन्तादेई सलक्खणा सुप्पसण्णा अज्जउत्तचलणा समं कुशलवा वि दीसन्ति ता णिब्भरम्हि आणन्देण। अहो तातः कुलगुरुरार्याजनः सभर्तृकार्या शान्तादेवी सलक्ष्मणाः सुप्रसन्ना आर्यपुत्रचरणाः समं कुशलवावपि दृश्यन्ते तन्निर्भरास्म्यानन्देन।

( नेपथ्ये कलकलः )

वाल्मीकिः—( उत्थायावलोक्य च। ) उत्खातलवणो मधुरेश्वरः प्राप्तः

लक्ष्मणः—सानुषङ्गाणि कल्याणानि।

रामः—सर्वमिदमनुभवन्नपि न प्रत्येमि। यद्वा प्रकृतिरियमभ्युदयानाम्।

वाल्मीकिः—रामभद्र उच्यतां किं ते भूयः प्रियमुपकरोमि।

रामः—अतः परमपि प्रियमस्ति। किं त्विदं[1] भरतवाक्यमस्तु।

पापेभ्यश्च पुनाति[2] वर्धयति च श्रेयांसि सेयं कथा
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च।

---

कुलगुरुरार्याजनः सभर्तृका आर्या शान्तादेवी सलक्षणा सुप्रसन्ना। सलक्षणेति–शान्त्यादिस्वलक्षणविशिष्टेत्यर्थः। आर्यपुत्रलालनेन समं कुशलवावपि दृश्येते। तस्मान्निर्भरास्मि आनन्देन। 'समं सह' इत्यमरः। उत्खातः उन्मूलितः लवणः असुरभेदः येन। मधुरेश्वरः शत्रुघ्नः। माधुरस्य कुम्भीनसीपुत्रस्योन्मूलनाय शत्रुघ्नं प्रेषयामीति प्रथमाङ्कपूर्त्यवसरे रामेणोक्तं संविधानरहस्यमत्र दूरदर्शिभिरनुसन्धेयम्। अनुषङ्गः अनुबन्धः। अनुभवन्नपि न प्रत्येमि न विश्वसिमि। प्रकृतिः स्वभावः। अभ्युदयानां आरम्भे सति अभ्युदयः पुनरुत्तरो भवेदिति भावः। येन नान्दी कृता तस्य भरतस्य वाक्यमिति संप्रदायः॥ अथ कविः पूर्वार्धेन रामकथाफलमाह–पापेभ्यश्चेति ॥ २० ॥ या गङ्गेव पुनाति, जगतो मातेव लक्ष्मीरिव, 'इन्दिरा लोकमाता' इत्यमरः। वर्धयति च, इयं कथा रामस्येति शेषः। मङ्गले ऐहिकफलरूपे साधुः मङ्गल्या। मनोहरा च आमुष्मिकफलदानेनेति भावः। 'स याति ब्रह्मणः स्थानम्' इति स्मरणात्। अत्र चत्रयं पादपूरणे॥ अथ

---

१ 'तथापीदमस्तु' क–घ–च. २ 'पुनातु वर्धयतु' क–घ–च.

तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतां[1] प्राज्ञस्य वाणीमिमाम् ॥ २० ॥

( इति निष्क्रान्ताः सर्वे । )

इति सम्मेलनं नाम सप्तमोऽङ्कः ।

इति महाकविश्रीभवभूतिविरचितं
उत्तररामचरितं नाम नाटकं समाप्तम् ।

---

उत्तरार्धेन स्ववाणीप्रयोजनमाह—**तामिति** । **बुधाः** ज्ञातारः । 'ज्ञातृबुधाः' इत्यमरः । **परिणतां** ग्रन्थात्मना परिनिष्ठिताम् । **विन्यस्तरूपां** विशेषेण यथोचितोल्लेखप्रचुरेणेति यावत् । न्यस्तामि ... इति वत् ( ? ) वस्तुचमत्कारानुगुण्येन निवेशितानि रूपाणि पात्राणि यस्याम् । अत एव **एतां** 'चित्रकिर्मीरकल्माषशबलैताश्च' इति 'चित्रैतशबलाः' इत्यमरविक्रमार्कौ । **तां** रामकथां कृतार्थीकृताम्, प्रसिद्धां वा । **इमां प्राज्ञस्य** पदवाक्यप्रमाणज्ञस्येति । शब्दब्रह्म वेत्ति विदः । 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' इति स्मरणात् । **कवेः** भवभूतिनाम्नो मम । **वाणीं** नाटकमयीं वाचम् । **अभिनयैः** लेखेन पठनपाठनप्रचारणाभिनन्दनादिभिः । 'प्रचारणादौ भावाङ्गदर्शनेऽभिनयो मतः' इत्यगस्त्यः । **परि** परितः । 'परि स्यात्परितोऽर्थेऽपि' इति केदारः। **भावयन्तु** लालयन्तु । 'आदरे लालने च स्याद्भावना' इति जयः । अलमतिविस्तरेण ॥

---

इतिमहाराजपदमहनीयतुक्काजिराजगृहामात्येन मौनभार्गवकुलाकूपारचन्द्रचोण्डोबाळाजीपुत्रेण कौण्डिन्यगोत्रपारावारनिस्तुलकौस्तुभतिम्माजिबाळाजिदौहित्रेण काशीमहादेवतनूजेन शाकम्भरिपरमहंसचिदम्बरब्रह्मानुजेन नवरसभुवातिशायिचतुरचतुरधिकषष्टिप्रबन्धिदशभाषाभव्याष्टपदीपदपद्यवर्णविलसदन्यूनाक्षरमालिकार्यास्तवनकवनधौरन्धरीपारीणेन गीतगाथासहस्रचतुष्टयदिव्यदेवीताटङ्कलिपिकल्पकेन दुर्जनातिनिन्द्येन सज्जनाभिनन्द्येन सुन्दरीकमलजानिना वश्यवचःसर्वज्ञसरस्वतीनामक [illegible] ण्डितेन श्रीरामनवमीनिशीथजागरण एवारब्धपरिपूरिते उत्तररामचरितसंजीवनाख्यटिप्पणे सप्तमोऽङ्कः संपूर्णः ॥

॥ इति घनश्यामपण्डितविरचिते उत्तररामचरितसंजीवनाख्यटिप्पणे सप्तमोऽङ्कः॥

---

[1] 'परिणतप्रज्ञस्य' क-घ-च

# NOTES.

## Act I.

( The Pages in the Notes refer to the Text. )

P. 1. All Sanskrit writers generally introduce their works with a salutation or benediction. This (Mangala as it is called) is supposed to be necessary for the removal of obstacles and the safe completion of the work undertaken. Bhavabhûti follows this practice. As to the efficacy of Mangala, see Mahâbhâshya 'माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति' ( Kielhorn, Vol I p. 7 ). Construe:—आत्मनः कलाम् अमृताम् देवतां वाचम् विन्देम (इति) इदं पूर्वेभ्यः कविभ्यः नमोवाकं प्रशास्महे. इदम् is the object of प्रशास्महे and has 'विन्देम—कलाम्' in apposition with it. कविभ्यः...वाकम् having made an obeisance to former poets. The poets referred to are such as Vâlmiki, Vyâsa and others. Some explain that Vâlmiki alone is referred to and that the plural is used only to show the great respect in which the author holds Vâlmiki. This, however, is not a natural way of explanation. V. and R. read गुरुभ्यः for कविभ्यः, which makes very little change in the meaning. नमोवाकम्—is an adverb to प्रशास्महे. It may be explained in several ways. It is a gerund in अम् ( णमुल् ) from वच्. नम इति उक्त्वा नमोवाकम्. The affix अम् is applied to roots, either standing alone or in conjunction with other words, in various senses such as repetition, entirety &c., *e. g.* स्मारं स्मारं नमति शिवम् ( स्मृत्वा-स्मृत्वा ), ब्राह्मणवेदं भोजयति ( यं यं ब्राह्मणं जानाति तं तं ). 'आभीक्ष्ण्ये णमुल् च' पा० 3. 4. 22. and the following Sûtras. नमोवाकम् may also be explained as 'नमः ( शब्दस्य ) वाकः उच्चारणं यस्मिन्कर्मणि तद्यथा तथा.' In this latter case वाक is a noun formed from वच् with the affix घञ्. प्रशास्महे—we wish, we pray. The root शास् ( 2nd *conj.* ) is परस्मैपदी but when preceded by आ in the sense of 'wish,' it takes आत्मनेपद. "आङः शासु इच्छायाम् । आशास्ते, आशासाने । आङ्पूर्वत्वं प्रायिकम् । तेन 'नमोवाकं प्रशास्महे' इति सिद्धम् ।" सि. कौ. Here though प्र is the उपसर्ग used instead of आ, the sense being the same, the root takes आत्मनेपद. विन्देम ( Pot. 1st person *plu.* of विद् 6th *conj.* ) may we obtain. अमृताम्—immortal. Speech being called देवता must be said to be immortal. Or we may explain that, as, according to the Pûrvamîmâṃsâ, the relation of

word and meaning is eternal, the goddess of speech which is the अधिष्ठात्री of words must be eternal also. आत्मनः कलाम् which is an aspect ( or phase or part ) of the Supreme Soul. The Vishṇupurâṇa says that poetical utterances, songs &c. are the body of the Lord Vishṇu 'काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च । शब्दमूर्तिधरस्यैतद्वपुर्विष्णोर्महात्मनः ॥' विष्णु० 1. 22. 84. N. and G. read वन्देमहि च तां वाणीम्. This reading is not bad. With this reading, however, the first half of the verse would cause some difficulty, since we shall have to construe as पूर्वेभ्यः कविभ्यः इदं नमोवाकं प्रशास्महे. प्रशास्महे would simply mean नमहे. We shall have further to take इदं ( which is neuter ) with नमोवाकं (either an adverb, or a masculine noun in the accusative ).

It will be noticed that G. explains the first half as containing a salutation to Gaṇapati. ब्रह्मणस्पति is addressed in the ऋग्वेद as 'कवीनां कविः' and is identified by G ( as many other orthodox writers do ) with गणपति. G further says that the plural कविभ्यः is used to show respect. This is not a natural explanation. There is no reason why the plural should not be used with respect to वाणी also. वीर० gives various far-fetched explanations of this verse, for which see pp. 7-8 of N. The words आत्मनः कलाम् may be taken as suggesting the principal characters of the drama, राम and सीता.

**P. 4.** नान्द्यन्ते at the end of the नान्दी. नान्दी means a benediction, consisting of one or more verses, which constitutes a sort of prologue to a drama. नन्दन्ति देवताः अस्यामिति नान्दी. It is defined by भरत as 'आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥' ( नाट्यशास्त्र 5. 25 ) or 'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥' साहित्यदर्पण ( 6th परिच्छेद, 24th verse ). From the stage direction ( नान्द्यन्ते ), it is clear that the verse 'इदं कविभ्यः' &c., is the नान्दी here. As the words नान्द्यन्ते सूत्रधारः occur after the *introductory* verse, a question arises as to who recited that verse and why the words follow the verse and do not precede it. It seems to us that the verse was recited by the सूत्रधार himself, but as that verse was really no part of the drama itself, being intended as a benediction, the word सूत्रधारः does not precede the first verse. The real business of the drama commences after the introductory benediction. These words ( नान्द्यन्ते सूत्रधारः ) have puzzled many writers and various explanations have been offered. The साहित्यदर्पण says "अत एव प्राक्तनपुस्तकेषु 'नान्द्यन्ते सूत्रधारः' इत्यनन्तरमेव 'वेदान्तेषु' इत्यादिश्लोकलिखनं दृश्यते । यच्च पश्चात् 'नान्द्यन्ते सूत्रधारः' इति लिखनं

तस्यायमभिप्रायः—नान्द्यन्ते सूत्रधार इदं प्रयोजितवान्, इतः प्रभृति मया नाटकमुपादीयते इति कवेरभिप्रायः सूचित इति." Similarly वीरराघव says 'नान्द्याः पूर्वोक्तायाः समाप्तौ सूत्रधारः प्रविश्याहेति शेषः'. जगद्धर, in his comment on मालतीमाधव, gives a long note on the words नान्द्यन्ते सूत्रधारः. भरत distinctly says that the नान्दी is to be recited by the सूत्रधार and that it is to consist of eight or twelve पदs. 'सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः । नान्दीं पदैर्द्वादशभिरष्टभिर्वाप्यलङ्कृताम् ॥' (नाट्य० 5. 98.). What पद means here is a disputed question. The ordinary meaning is 'a word' (सुप्तिङन्तं पदम् । पा० I. 4. 14). This would mean that नान्दी is not to exceed 8 or 12 words. But in many dramas there are नान्दीs containing two or three verses. Hence some interpret पद to mean a quarter of a verse. There are dramas, however, where none of these meanings will do; *e. g.* the first verse of the विक्रमोर्वशीय, of the शाकुन्तल *&c.* It seems probable that N. and G. read 'वन्देमहि च तां वाणीं' to satisfy the definition of नान्दी. The verse in the text contains only eleven words, while as read by N. and G. it contains twelve. अल...रेण enough of prolixity. अलम्, in the sense of 'enough of' 'away with', governs the instrumental. काल...यात्रायाम् in the fair held in honour of S'iva. Most editions read कालप्रियनाथस्य. काल means शिव and कालप्रिया would mean पार्वती. कालप्रियानाथ would thus be शिव. वीर० commenting on महावीर० says "कालप्रियानाथस्य कालप्रियानामिकाम्बिकापतेः । कालप्रियनाथस्येति ह्रस्वान्तप्रियशब्दयुक्तः पाठः प्रचुरो दृश्यते । तत्राप्यर्थः पूर्ववत् । 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति वैकल्पिकह्रस्वप्रवृत्तेः". राजशेखर in his काव्यमीमांसा (p. 94) says that कालप्रिय is a city to the north of which is गाधिपुर (*i. e.* Kanoj). So कालप्रिय is probably उज्जयिनी, where there is a famous shrine of S'iva. In ancient India it was usual to exhibit dramatic performances at the time of fairs and other festivals. The मालतीमाधव also was introduced to the audience for the first time at the fair of S'iva. R. comments 'कालप्रियनाथो नाम विदर्भेषु पद्मनगरे प्रतिष्ठितो देवमूर्तिविशेषः । तस्य यात्रायामुत्सवे नाटकमिदं भगवतः कालप्रियनाथस्य पुरतः प्रथममभिनीतमासीत्'. आर्यमिश्रान्—*vide com.* जगद्धर quotes from भरत 'कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता । अद्रोह इति येष्वेतत्तानार्यान् संप्रचक्षते ॥'. मिश्र is an honorific title affixed to the names of famous scholars *e. g.* मण्डनमिश्र, वाचस्पतिमिश्र, पार्थसारथिमिश्र. अत्रभवन्तः—The words अत्रभवत् and तत्रभवत् are epithets of honour, the former applied to a person who is present, the latter to one who is not present. 'पूज्ये तत्रभवानत्रभवांश्च भगवानपि'. G. seems to have separated अत्रभवन्तः into अत्र भवन्तः. वीर० also says 'अत्रभवन्तः पूज्याः यूयम् ।...यद्वा अत्र अस्मिन्नगरे भवन्तः यूयमित्यर्थः.' श्रीकण्ठपदलाञ्छनः

who had the title श्रीकण्ठ by way of distinction. श्रीकण्ठ इति पदं लाञ्छनं यस्य. G. explains in another way 'who was devoted to the feet of S'iva.' It seems that the poet's original name was भवभूति and that later on he was given the title of श्रीकण्ठ. वीर० reverses this order and says that श्रीकण्ठ was his real name and that he was called भवभूति by a king who was pleased with a verse of the poet. *Vide com.* R. says 'लोकातिगकविशक्तिदर्शनाद्वाग्देवीनित्यकालमस्य कण्ठे वसतीति मत्वा तदानींतनैः भवभूतेः श्रीकण्ठ इति विशेषणं परिकल्पितम्.' पद...ज्ञः who knows the sciences of Grammar, Logic and Mîmâṇsâ. पदं means 'an inflected word' and stands for Grammar which deals with words. वाक्य a sentence. Logic deals with sentences and the fallacies that lurk in them. प्रमाण means 'authoritative means of knowledge'. The मीमांसा (both पूर्व and उत्तर) deals with शब्द and other प्रमाणs. वीर० on महावीरचरित says 'पदवाक्यप्रमाणज्ञो व्याकरणतर्कमीमांसाभिज्ञः.' According to others वाक्य stands for मीमांसा (because मीमांसा helps one to understand Vedic passages which often appear contradictory) and प्रमाण for तर्क (logic). Compare 'पदावगतिहेतुत्वात्पदं व्याकरणम् । वाक्यसमन्वयावसायहेतुत्वाद्वाक्यं मीमांसा । प्रमाणप्रतिपत्तिकारित्वात्प्रमाणं तर्कः ।' मुकुल in अभिधावृत्तिमातृका (verse 13). जातूकर्णीपुत्र son of a woman who was sprung from जातूकर्ण्यगोत्र.

भरत says that the poet's name should be mentioned 'प्रसाद्य रङ्गं विधिवत्कवेर्नाम च कीर्तयेत् । प्रस्तावना ततः कुर्यात्काव्यप्रख्यापनाश्रयाम् ॥' (नाट्य० 5. 154). Similarly the साहित्यदर्पण says 'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः । रूपकस्य कवेराख्या गोत्राद्यपि स कीर्तयेत् ॥'.

**Verse 2**—ब्रह्माणं = ब्राह्मणम्. 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' इत्यमरः. The propriety of the word is twofold. भवभूति wants to place emphasis on the fact that he scrupulously performed the six duties of a ब्राह्मण *viz.* यजन, याजन, अध्ययन, अध्यापन, दान and प्रतिग्रह. The word ब्रह्माणं also suggests प्रजापति, whose wife सरस्वती is represented to be. इयम्—This may mean 'well known to all. वश्ये...वर्तते follows like an obedient wife or like a woman enamoured. N. reads अन्ववर्तत (Imperfect of वृत् with अनु) which is bad, as the word अस्ति has been already used. N. reads वश्येव. We may then construe एव with यम्; यमेव (नान्यं कमपि कविं) इयं देवी वाक् वश्या (सती) अनुवर्तते. But this is not quite happy and there is दूरान्वय. उत्तरं...चरितं—The latter part of the life or history of Râma. This drama is a complement of the महावीरचरित which deals with the events of Râma's life up to his installation on the throne of Ayodhyâ. तत्प्रणीतं—तेन ब्रह्मणा प्रणीतं—composed by that (ब्राह्मण

भवभूति ). *Vide* comment of G. which disapproves of the reading in the text and prefers यत्प्रणीतम्. The idea of G. is that भवभूति, the antecedent, being mentioned in the words 'अस्ति &c.' the verse should contain only relative clauses. The reading in the text may be defended as follows:—भवभूति is no doubt already mentioned. But there is no harm if we take the first half of the verse by itself and understand तत्प्रणीतं &c., as a separate co-ordinate sentence to 'अस्ति खलु &c.' प्रयोक्ष्यते Will be represented ( by us ). The reading प्रयुज्यते is not bad. The present is also used when an act which is to happen immediately in the future is intended to be expressed. With the words वाग्वश्येवानुवर्तते, compare महावीरचरित I. 4. 'वश्यवाचः कवेर्वाक्यं सा च रामाश्रया कथा ।'

5. कार्यवशात्...संवृत्तः here have I become a sojourner in Ayodhyâ for some purpose as well as one living at the time (when Râma was crowned ). The Sûtradhâra throws off his real character as a person belonging to the place where the drama was acted and says that he is now an inhabitant of Ayodhyâ, where he has accidentally come for some business. This would explain his words on p. 6. 'वैदेशिकोऽस्मीति' &c. R. explains 'कार्यवशात् नाटकप्रयोगानुरोधात्.' This would not properly account for the words 'वैदेशिकोऽस्मीति' on p. 6 below. N. reads कविवशात् (at the poet's bidding), which would come to the same thing as the explanation of R. There are various ways in which the business of the drama can be introduced on the stage. Here the dialogue between the Sûtradhâra and Nata refers to Râma and Sitâ in the 7th verse and paves the way for their appearance. आयोध्यकः—from अयोध्या by the affix वुञ् according to 'धन्व—योपधाद्वुञ्' पा० 4. 2. 121. (धन्वविशेषवाचिनो वृद्धाद्वुञ् स्यात् । सि. कौ. ) and 'अवृद्धादपि बहुवचनविषयात्' पा० 4. 2. 125. आयोध्यिकः (अयोध्यासम्बन्धी ) may be explained on the analogy of आध्यात्मिक. तदानींतनः—रामपट्टाभिषेककालीनः. अत्रभवतः goes with रामस्य. पौलस्त्य... केतोः (रामस्य ) who is the fire (destroyer ) of the family of रावण. रावण was the son of विश्रवस्, who was the son of पुलस्त्य, one of the प्रजापतिs. 'प्रजापतीनां षण्णां तु चतुर्थोऽयं प्रजापतिः । मानसो ब्रह्मणः पुत्रः पुलस्त्य इति विश्रुतः ॥ पुलस्त्यस्य तु तेजस्वी महर्षिर्मानसः सुतः । नाम्ना स विश्रवा नाम प्रजापतिसमप्रभः ॥ तस्य पुत्रो विशालाक्षि रावणः शत्रुरावणः ।' रामायण सुन्दर० 23. 6–8. धूमकेतुः fire ( धूमः केतुः लिङ्गं चिह्नं वा अस्य ) 'अग्न्युत्पातौ धूमकेतू' इत्यमरः. धूमकेतु means also 'comet', the appearance of which was supposed to be a precursor of calamities. Râma may be also called a comet to the family of पौलस्त्य (indicating the destruc-

tion of that family). रात्रिंदिवम् (रात्रौ च दिवा च रात्रिंदिवम् irregular द्वन्द्व according to the Sûtra, 'अचतुर' &c. पा० 5. 4. 77, which is a very long one) by day and night, constantly. असं...नान्दीकः (an adj. of समयः) in which the joyful music was not to be discontinued. असंहता आनन्दनान्दी (आनन्दसूचिका नान्दी मङ्गलं) यस्मिन् (बहुव्रीहि). The affix क is added to बहुव्रीहि compounds when the last member is a feminine noun ending in ई or ऊ or a noun ending in ऋ. 'नद्यृतश्च' पा० 5. 4. 153. रङ्गराज cited by Gh. explains नान्दी as the 'symphony of 12 drums beaten at the same time' (एकदा द्वादशमृदङ्गघोषो नान्दी). तत् therefore. किमि...स्थानानि why is it that the squares (public streets) are now without the singing of bards? विश्रान्ताः चारणाः येषु. चारणः a wandering singer, actor (चारयति कीर्तिम्). 'भरता इत्यपि नटाश्चारणास्तु कुशीलवाः' इत्यमरः. चत्वरः (मराठी चव्हाटा) a place where four roads meet; also 'royal court-yard.' 'अङ्गनं चत्वराजिरे' अमरः; 'चत्वरं स्यात्पथां श्लेषे स्थण्डिलाङ्गनयोरपि' हैमः. G. seems to have read ०चरणानि; the meaning, then, would be 'in which there are no people moving about'. भाव—is a term of address used in dramas showing respect. 'भावो विद्वान्' इत्यमरः. 'मान्यो भावेति वक्तव्यः किंचिन्न्यूनस्तु मारिषः' quoted by जगद्धर. प्रेषिताः were sent (this goes with ०राक्षसाः, महर्षयः, राजर्षयः). Separate हि इतः (from this place *i. e.* from अयोध्या). स्वगृहान् (*accu. plu. mas.* of स्वगृह) is the object of प्रेषिताः. गृह is ordinarily neuter; but may be masculine when the plural is used. महाराजेन = रामेण. लङ्का... सुहृदः friends in the war in Lankâ (against रावण). प्लवङ्गमः a monkey. सभाजनाय or सभाजने उपतिष्ठन्ति ते सभा...स्थायिनः who waited upon him for greeting or congratulating him (राम). This qualifies महर्षयः and राजर्षयः. The reading समाजोपस्थायिनः would mean 'who waited upon him in groups' or 'who waited upon him in the assembly'. This is not a happy reading. सभाजनम् is derived from the root सभाज् 10th *conj.* 'अथ द्वे आनन्दनसभाजने। आप्रच्छनम्' अमरः. नाना...गताः that had come from various quarters (नानादिगन्तेभ्यः आगताः). The reading नाना...पावनाः (purifiers of various quarters) is not appropriate here. महर्षयः वसिष्ठगौतमादयः, राजर्षयः जनकादयः. There were various grades of sages, ऋषि, महर्षि, देवर्षि (like नारद) &c. यत्समाराधनाय for pleasing whom (येषां समाराधनाय). इयतो दिवसान् (accusative of time) for so many days.

P. 6. आः is an interjection implying 'recollection' here. 'आः स्मरणेऽपाकरणे कोपसन्तापयोस्तथा' मेदिनी. निमित्तम् reason (why there was no music in the squares). As all the guests had gone away, the festivities came to an end. अन्यच्च and there is

another (reason). **Verse 3.** वसिष्ठेन अधिष्ठिताः headed by वसिष्ठ. He was the family priest of the solar race. G. takes वसिष्ठाधिष्ठिताः as बहुव्रीहि, but we expect in that case अधिष्ठितवसिष्ठाः. देव्यः queens. The word देवी is applied to a crowned queen. राघवमातरः mothers of Râma *viz.* कौसल्या, सुमित्रा and कैकयी. राघव *lit.*, a descendant of रघु, here राम. अरुन्धतीं पुरस्कृत्य having placed in their front अरुन्धती (the wife of वसिष्ठ). The word जामातुः may be connected both with यज्ञे and आश्रमम्. Or we may supply सति after यज्ञे, the meaning being 'there being a sacrifice.' आश्रमं is to be connected with गताः.

वैदेशिको...पृच्छामि I am a foreigner; therefore I ask.

Some Mss change the order of speakers here. After the third verse the सूत्रधार is made to say एवमेतत् and the words वैदेशिकोऽस्मि &c. are put in the mouth of the नट and the passage from कन्यां दशरथो राजा to उपतिष्ठावः is assigned to the सूत्रधार. This does not seem to us to be proper. The नट does not appear to be वैदेशिक. When the सूत्रधार inquires why the squares are silent, it is the नट that gives him the information that राम's mothers are gone to the आश्रम of the son-in-law. Having given that information himself it does not seem proper that he should himself ask who the जामाता was. **Verse 4.** व्यजीजनत्—Aorist of the causal of जन् with वि. अपत्यकृतिकाम्—who was treated as a child. अपत्यस्य कृतिर्व्यापारः यस्याः or अपत्याय कृतिः ग्रहणं यस्याः. The affix क is optionally added to all बहुव्रीहि compounds. रोमपाद was king of अङ्गदेश. The रामायण seems to say that शान्ता was the daughter of रोमपाद himself and not of दशरथ. 'एवमङ्गाधिपेनैव गणिकाभिर्ऋषेः सुतः । आनीतोऽवर्षयद्देवः शान्ता चास्मै प्रदीयते ॥ ऋष्यशृङ्गस्तु जामाता पुत्रांस्तव विधास्यति ।' बालकाण्ड 9. 18–19. See also बालकाण्ड 11. 2–5. It is the विष्णुपुराण that distinctly says that दशरथ gave his daughter to रोमपाद. 'यस्मादजपुत्रो दशरथः शान्तां नाम कन्यामनपत्याय दुहितृत्वे युयोज ।' विष्णु॰ IV. 18. ऋष्यशृङ्गः—According to रामायण बालकाण्ड (chapter 9 ff) he was brought up by his father in the forest and he saw no other human being till he reached manhood. When a great drought devastated the country of अङ्ग, the king रोमपाद caused ऋष्यशृङ्ग to be brought to him through the seductive charms of damsels and gave शान्ता to him in marriage. ऋष्यशृङ्ग being pleased caused copious rain in अङ्ग. It was this sage who performed the sacrifice for दशरथ which caused the birth of राम and his three brothers. उपयेमे married. यम् is Parasmaipadi, but when preceded by उप in the

sense of 'marrying' or (according to some) 'accepting' it takes आत्मनेपद. 'उपाद्यमः स्वकरणे' पा० 1. 3. 56. तेन...रब्धम् he has commenced a sacrificial session lasting for twelve years. द्वादशवार्षिकम्—द्वादशवर्षाणि भावि (भविष्यति) इति—according to 'तमधीष्टो भृतो भूतो भावी' पा० 5. 1. 80 (मासमधीष्टः मासिकोऽध्यापकः । मासं भृतः मासिको व्याधिः । मासं भावी मासिक उत्सवः । सि. कौ.). We see from the second Act that the सत्र was only begun when this was spoken and was finished twelve years after this time. आत्रेयी says in the second Act 'संप्रति परिसमाप्तं द्वादशवार्षिकं सत्रम्'. At the time when आत्रेयी spoke this, the sons of सीता, कुश and लव, were about twelve years old. Therefore the explanation of Gh 'द्वादशसु वर्षेषु भूतं' does not seem to be correct. तदनुरोधात् in compliance with his (ऋष्यशृङ्ग's) request. तस्य अनुरोधात्. अनुरोधः acting according to the wishes (of another). 'अनुरोधोऽनुवर्तनम्' इत्यमरः. कठोरगर्भाम्—कठोरः गर्भः यस्याः—who was far advanced in pregnancy. गुरुजनः elderly persons (such as कौसल्या, वसिष्ठ and others). तत्किमनेन—then what is the use of this? He refers to the topic of the द्वादशवार्षिक सत्र. राज...तिष्ठावः Let us wait at the royal gate itself in conformity with the practice of our caste (profession). It is not clear what जाति is particularly referred to. R explains स्वजात्याः चारणजात्याः समयेन राजस्तुतिरूपेण आचारेण.' Gh. explains 'स्वजातेः नटजातेः समयेन.' The latter seems to us to be preferable. There is nothing to show that the सूत्रधार had assumed the character of a चारण. समय means 'आचार'. 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः. स्था with उप to wait upon, serve. स्था, when preceded by उप in the sense of 'worship of a deity,' 'joining together,' 'making friendship with' and 'road', takes Atmanepada necessarily. 'उपाद्देवपूजा-संगतिकरण-मित्रकरण-पथिष्विति वाच्यम्' वार्तिक on 'उपान्मन्त्रकरणे' पा० 1. 3. 25. Here the meaning is different and so we have उपतिष्ठावः. तेन हि therefore, if that be so. निरूप... भाव: let your honour think (find out) of some very correct mode of panegyric proper for (the time of) waiting upon the king. राज्ञः is to be connected with उपस्थान in the compound उप...पद्धतिम्. उपस्थाने (कर्तव्यस्य) स्तोत्रस्य प्रशस्तेः पद्धतिः प्रकारः तां पद्धतिम्. उपस्थानम् going near to and waiting upon. मारिषः a worthy or respectable person. This is a term of address used by the सूत्रधार when talking with the actors. 'आर्यस्तु मारिषः' इत्यमरः. **Verse 5.** सर्वथा.. वचनीयता One should do (his duty) by all means; for whence can there be exemption from blame? The meaning is:—One should do one's duty to the best of one's ability without caring for the censure of some person or other. G. seems to have read व्यवह.

तंव्ये for व्यवहर्तव्यम्. The meaning in that case is 'whence (how) can there be freedom from blame in matters that must be done (by one) absolutely (or in any case)'? The idea, when G.'s reading is taken, is that, when one must do a thing (whether one wills it or not) he must do it and cannot hope to escape censure, because that is the lot of all. The reading in the text is happier than that of G. यथा...जनः men are wicked as regards the chastity of women and speech (*i. e.* men always indulge in scandals about women and are always prone to find blemishes in compositions, whatever pains the author may have taken to write in a chaste style). The author here is preparing the ground for introducing the slander about Sitâ. There is also a further suggestion in that the poet here seems to enjoy a fling at the critics of his plays. अति...वक्तव्यम् you should say very wicked (instead of using the comparatively mild expression 'wicked').

**P. 7. Verse 6.** देव्या—जनः—this verse constitutes the reason why people must be called very wicked. देव्या...जनः since among men there is a scandal about the queen, daughter of the king of विदेह. The word वैदेह्यां is significant. Even the daughter of a noble and sage king like जनक does not escape popular scandal. सापवादः—अपवादेन सह (बहुव्रीहि)—qualifies जनः. सापवादः one who spreads a scandal. रक्षसः (राक्षसस्य रावणस्य) गृहे स्थितिः. रक्षो...निश्चयः (her) residence in the house of the demon is the root (of the scandal); but as regards her purification in fire, there is unbelief (nobody believes in it). As regards the incidents leading to अग्निशुद्धि, see रामायण युद्धकाण्ड सर्ग 115–118. After the defeat and death of रावण, राम welcomed सीता rather coldly and said that he could not take her back as she had dwelt in another's house very long. Sitâ then called upon लक्ष्मण to prepare the funeral pyre in which she desired to cast herself. After going round Râma and calling upon fire not to harm her if she were chaste, she entered it. Then fire assumed bodily form and handed over सीता to Râma who then joyfully received her. We give a few verses from the above Sargas 'तद्गच्छ त्वानुजानेऽद्य यथेष्टं जनकात्मजे। एता दश दिशो भद्रे कार्यमस्ति न मे त्वया॥ कः पुमांस्तु कुले जातः स्त्रियं परगृहोषिताम्। तेजस्वी पुनरादद्यात्सुहृल्लोभेन चेतसा॥ सर्ग 115. 18–19; शनैर्गद्गदया वाचा भर्तारमिदमब्रवीत्॥ किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम्। रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव।' ... यदहं गात्रसंस्पर्शं गतास्मि विवशा प्रभो। कामकारो न मे तत्र दैवं तत्रापराध्यति॥ मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते। पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरी॥ ... चितां मे कुरु

सौमित्रे व्यसनस्यास्य भेषजम् । मिथ्यापवादोपहता नाहं जीवितुमुत्सहे ॥ ... अधोमुखं स्थितं रामं ततः कृत्वा प्रदक्षिणम् । उपावर्तत वैदेही दीप्यमानं हुताशनम् ॥ ... बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः । यथा मे हृदयं नित्यं नापसर्पति राघवात् । तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥ यथा मां शुद्धचारित्रां दुष्टां जानाति राघवः । तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥ एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम् । विवेश ज्वलनं दीप्तं निःशङ्केनान्तरात्मना ॥ सर्ग 116. 4–5, 8–9, 18, 24–27; विधूयाथ चितां तां तु वैदेहीं हव्यवाहनः । उत्तस्थौ मूर्तिमानाशु गृहीत्वा जनकात्मजाम् ॥... अब्रवीत्तु तदा रामं साक्षी लोकस्य पावकः । एषा ते राम वैदेही पापमस्यां न विद्यते ॥ सर्ग 118 . 2, 5. किंवदन्ती—popular report ( evil report ). 'किंवदन्ती जनश्रुतिः' इत्यमरः. The word seems to be derived from 'किं वदन्ति' ( what do the people say ). महाराजं...स्यन्देत were to reach (lit. flow to ) His Majesty (Râma ). तत्...स्यात् it would be woeful. The various readings presented by the editions are many but they all mean the same thing. G. seems to read प्रतिष्ठते for प्रति स्यन्देत. सर्वथा...विधास्यन्ति the sages and the gods will by all means bring about what is good. These two speeches of the सूत्रधार and the actor suggest respectively the बीज of the whole drama and its termination. परिक्रम्य walking about ( on the stage ). आकर्ण्य the actor represents that he listens to what people say. एवं refers to the following श्लोक. **Verse 7.** स्नेहा...स्य having come through affection for congratulating (राम on his coronation). दिनानि अमूनि is the object of नीत्वा. नीत्वा उत्सवेन having passed in festivities. विदेहान्—is to be connected with गतः. Names of countries are to be used in the plural. विदेह lay to the north-east of मगध and contained the northern part of the modern district of Tirhoot and part of Nepal also. जनक found सीता in the ground ploughed for sacrificial purposes and brought her up as his daughter. See रामायण बालकाण्ड 66. 13–14. 'अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः । क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ॥ भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा ॥.' विमनसः qualifies देव्याः ( सीतायाः ). ततः on account of that ( *viz.* her father's departure ). विमनसः—खिन्नायाः—who is distracted in mind ( विगतं मनः यस्याः). धर्मासनात् from the seat of justice. वासगृहम् inner apartments of a house. 'गर्भागारं वासगृहम्' इत्यमरः. नरेन्द्रः king (राम here). This verse prepares the audience for the entry of राम and सीता. It is a canon of Sanskrit dramaturgy that no character should enter or leave the stage without previous intimation to the audience. See com. निष्क्रान्तौ—the dual indicates the सूत्रधार and the actor. Where the सूत्रधार holds conversation with नटी or विदूषक or other actors and where that conversation suggests the matter in hand, that is आमुख, also called प्रस्तावना. 'नटी विदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ चित्रै-

